' न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति श्रुतिमनुसृत्य कश्चिन्मन्दधीः स्वयमशुद्धहृदयो ज्ञानाय कर्मसंन्यासं कर्तुमिच्छति तदर्थमिदमुच्यते—

ज्ञानायाशुद्धहृत्कर्मसंन्यासं कर्तुमिच्छति ।
स वृद्धि कल्पवृक्षस्य काङ्क्षन्मूलं निकृन्तति ॥१९॥

अशुद्धं, मलिनं हृत्, हृदयं यस्य सः स्वयं मलिनहृदयोपि । ज्ञानाय, ज्ञानप्राप्तये । नियतकर्मणां न्यासम् कर्तुमिच्छति, काङ्क्षते स मूढमतिः कल्पवृक्षस्य वृद्धिं, विस्तारं, कांक्षन्निच्छन्नपि मूलं, बुध्नं, निकृन्तति, छिनत्ति । मूलनिकृन्तने यथा वृक्षस्य वृद्धिर्न, तथाऽशुद्धचेतसा कर्मत्यागे कृते न ज्ञानसिद्धिरित्यभिप्रायः। 'वीरहा वा एष देवानां योऽग्निमुत्सादयते' इत्यादिश्रुतेः । स्मृतिश्च ' न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ॥ कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते' इति ॥ १९ ॥

अधःसोपानगः षष्ठसोपानं ह्यारुरुक्षति ।
तथाऽप्राप्तज्ञानभूमिः षष्ठीं गामारुरुक्षति ॥ २० ॥

यथा कश्चित्पुरुषः, अधःसोपानं, आरोहणं गच्छतीत्यधःसोपानगः तथाभूतः सन्, ततोऽत्युच्चमुपरिस्थं, षष्ठं सोपानं, आरुरुक्षति, आरोढुमिच्छति । तथा, अप्राप्ता ज्ञानभूमिः शुभेच्छाख्या येन सः, षष्ठीं, पदार्थाभाविनीं गां, आरुरुक्षत्यारोढुमिच्छति । असंभावितमेतत् । ज्ञानभूमयो वासिष्ठे द्रष्टव्याः ॥ २० ॥

हित्वा जिघत्सुः परिविष्टमन्नं यथेहतेऽरं परमान्नमस्वः ।
हित्वा तथाऽज्ञो निजकर्म योगं ज्ञानं च वाञ्छत्यविशुद्धचित्तः॥ २१ ॥

जिघत्सुः, क्षुधितः । स्वयं अस्वः, न विद्यते स्वं द्रव्यं यस्य सोऽ

स्वः। अथवा न विद्यते स्वः परमान्नादिदाता स्वजनो यस्य स ईदृक् कश्चित् पुरुषः। परिविष्टं, पात्रे दत्तमन्नं, ओदनं, हित्वा। अरं, अत्यर्थं, परमान्नं, पायसं, यथा ईहते, इच्छति। तथा स्वयं अविशुद्धं, मलिनं चित्तं यस्य सः अज्ञः अज्ञानी। निजकर्म, स्वाश्रमोचितं कर्म, हित्वा, परित्यज्य। योगमष्टांगं योगं, तत्फलं ज्ञानं, अपरोक्षसाक्षात्कारं, वाञ्छति, स मूर्ख एवेत्यभिप्रायः ॥ २१ ॥

औत्सुक्यान्मन्दवैराग्यात्संन्यासं प्रकरोति यः।
भूत्वा स उभयभ्रष्ट उभयत्र सुदुःखभाक् ॥ २२ ॥

संन्यासिनां सज्जनकृतसत्कारादिकं दृष्ट्वा, मया संन्यासे स्वीकृतेऽप्येवं सत्कारो भविष्यतीत्यौत्सुक्यात्, औत्कंठ्यात्। मन्दवैराग्यात्, गृहसुहृत्पुत्रवित्तैषणादेर्दुःखावलोकनजन्यात्। यः विप्रः। संन्यासं, विधिवत्पारिव्राज्यं। करोति, स विप्रः, उभयाद्भ्रष्टः कर्मणो भ्रष्टो ब्रह्मज्ञानाच्च भ्रष्टः। उभयत्र, इहलोके परलोके च। सुतरां दुःखं भजतीति सुदुःखभाक् भवति। 'कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा' इति प्राचामुक्तेः ॥ २२ ॥

निन्दन्तीह तमात्मघ्नं लोका असुरमीश्वरः।
क्षिपत्यसुर्यलोकेषु हीनेषु च ततः परम् ॥ २३ ॥

लोकाः जनाः। असुषु रमत इत्यसुरः, प्राणपोषकस्तं आत्मघ्नं, आत्महनं, निन्दन्ति। ईश्वरः, परमेश्वरः। असुराणां स्वभावभूता असुर्याः, ते च ते लोकाश्च, तेषु, क्षिपति, प्रक्षिपति। ततः परं, हीनेष्वतिशयेनान्धतमसाऽऽवृतेषु वृक्षादियोनिषु प्रक्षिपति। नित्यशुद्धबुद्धमुक्तसच्चिदानन्दस्वरूपस्यान्यथात्वेन तिरस्करणमेवात्महननं। श्रुतिश्च 'असुर्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति। लोकनिन्दा च 'भिक्षावस्त्राणि

रक्षेयुर्यद्येते भोगतुष्टये। अहो यतित्वमेतेषां वैराग्यभरमन्थरम्' इत्याद्या। अपि च 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः। संन्यासिनोऽपि दृश्यन्ते दैवसन्दूषिताशयाः' इति वार्तिककारोक्तेः, औत्सुक्यमात्रेण संन्यासो न कर्तव्य इत्यर्थः ॥ २३ ॥

उपसंहरति—

विधिना त्रिविधेनातो यथाकालं यथोदितम्।
दैवीसम्पत्तियुक्तेन कर्तव्यं कर्म जानता ॥ २४ ॥

अतो हेतोः। त्रिविधेन, त्रिप्रकारेण विधिना। यथाकालं, यस्मिन्काले यद्विहितं तद्यथाकालम्। यद्येन प्रकारेण उदितं कथितं तद्यथोदितम् कर्म, नैमित्तिकं नित्यं च। जानातीति जानन् तेन, इतिकर्तव्यतात्वबोधकविधानज्ञेन। दैवीसंपत्त्या युक्तेन पुरुषेण, कर्तव्यं। 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते' एवं त्रिविधविधिः। दैवीसम्पत्तु गीतायां षोडशाध्यायेऽभिहिता अभयं सत्त्वसंशुद्धिरित्याद्या ॥ २४ ॥

जानता. कर्म कर्तव्यमित्युक्त्या बलात्समुच्चयवाद आपतित इति चेत्तत्राहानुवादपूर्वकम् —

अविपक्वकषायाणां संन्यासो मास्तु कर्म च।
ज्ञानं च सह कर्तव्यमितिचेन्न घटेत तत् ॥ २५ ॥

अविपक्वाः कषायाः रागद्वेषादयो येषां तेषां संन्यासो माऽस्तु, न भवतु। कर्म च ज्ञानं च सहैकेनाधिकारिणैककाले कर्तव्यम्। ज्ञानकर्मणी समुच्चित्यैकदैव कर्तव्ये इति चेत्तत्समुच्चयानुष्ठानं न घटेत। ज्ञानोत्तरं कर्तृत्वाद्यभावात्समुच्चयवादो न घटेतेति तात्पर्यार्थः ॥ २५ ॥

तर्हि 'विद्यां चाविद्यां च यस्तद्वेदोभय ँ सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति श्रुतेः; 'उभाभ्यामपि पक्षाभ्यां

पक्षिणां खे यथा गतिः। तथैव कर्मज्ञानाभ्यां प्राप्यते ब्रह्म शाश्वतम्'इति वासिष्ठोक्तेश्च किं तात्पर्यमित्यत आह—

ये समुच्चयवादिन्या विद्याविद्ये मते तु ते।
अविरोधाद्देवसंवित्क्रिये फलविशेषदे ॥ २६ ॥

विद्यां चाविद्यां चेति समुच्चयवादिन्याः श्रुत्याः। ये विद्याविद्ये, मते, संमते ते तु, । अविरोधात्परस्परं विरोधाभावात् । देवानां संविज्ज्ञानं च, क्रिया कर्म च ज्ञातव्ये । यतस्ते समुच्चयानुष्ठानात् विशेषं फलं ददत इति विशेषफलदे भवतः । अंधंतम इति श्रुत्याऽन्यदेवाहुर्विद्ययेति श्रुत्या च, कर्मणा पितृलोक इत्यविद्यापदवाच्यायाः विद्याया अन्यस्याः क्रियायाः, पितृलोकप्राप्तिरूपं फलमुक्तम् । तथा विद्यापदवाच्यदेवताज्ञानस्य विद्यया देवलोक इति देवलोकप्राप्तिलक्षणमन्यत्फलं चोक्तम् । अत्र च विधेयस्तुत्यर्थं एकैकानुष्ठाननिन्दया विशेषफलदत्वाद्देवताज्ञानपूर्वकं कर्मानुष्ठानं 'विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह' इत्यनया श्रुत्योक्तं तच्चाविरोधाद् घटत एव ॥ २६ ॥

तर्हि मन्त्ररूपैव देवता न ततोऽन्या काऽपि विग्रहवतीति केषांचिन्मीमांसकानां मतमनूद्य दूषयति—

देवता मन्त्ररूपान्या न विग्रहवतीति यत् ॥
कैश्चिदुक्तं न तत्सत्यं प्रत्यक्षादिविरोधतः ॥ २७ ॥

देवता इन्द्रादिरूपा । मन्त्रः रूपं यस्याः सा मन्त्ररूपा । विग्रहो देह आकारोऽस्यास्तीति विग्रहवती न भवतीति यत्कैश्चिदुक्तं, तत्सत्यं न। कुतः प्रत्यक्षादिविरोधतः। प्रत्यक्षं श्रुतिः तत्र 'वज्रहस्तः पुरन्दरः' इत्यादिना विग्रहवत्त्वं दर्शितं । आदिशब्दादनुमानं स्मृतीतिहासपुराणादि । तत्र च सूर्यः पुरुषः कुन्तीं जगाम, अश्विनौ मधुब्राह्मणं जग्रहतुरित्यादिप्रमाणानि सन्ति ॥ २७ ॥

तर्ह्येका देवताऽनेकेषु यागेष्वेककाल एव कथं यास्यति । आयाता चेत्कथं न दृश्यत इति चेद्विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनादिति व्यासाधिकरणोक्तन्यायस्य तात्पर्यमाहैकेन श्लोकेन—

या काऽपि देवताऽऽहूता यत्र तत्राशु तावतीः ।
कृत्वा मूर्तीर्योगिवत्सा प्राप्यात्त्यन्तर्हिता हविः ॥२८॥

या काऽपीन्द्राद्या देवता । यत्र यजमानेनाहूता, आकारिता सती, तत्र यागे, तावतीः मूर्तीः कृत्वा, तं तं यागे प्राप्यापि अन्तर्हिता गुप्तस्वरूपा सती । हुतं हविः, अत्ति भक्षति । कथमेकस्या अनेकयज्ञे एकदेवानेकत्वमित्यत्र दृष्टान्तः योगिवदिति । योगिनामनेकदेहधारणत्वं स्मर्यते 'आत्मनो वै शरीराणि बहूनि मनुजेश्वर । योगी प्राप्य बलं कुर्यात्सर्वैस्तैर्विचरेन्महीम् ॥ १ ॥ कैश्चिद्भोगान्समश्नाति कैश्चिदुग्रं तपश्चरेत् । संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥ २ ॥' एवं योगिनां महिमा, किमु वक्तव्यमाजानदेवानाम् ॥ २८ ॥

अतो ध्यात्वेशवचसा देवेभ्यो ददते हविः ।
ईश्वरं योऽवमन्येत तद्वचश्च पतेदधः ॥ २९ ॥

यस्मादेवं अतः । ईशवचसा, ईशस्येश्वरस्य वचनं वेदमन्त्रस्तेन यजमानाः देवेभ्यो हविः ददते । यः, ईश्वरं, तद्वचः वेदं चावमन्येत, स नास्तिकः, अधो, नरके पतेत् । 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्साक्षादेव तद्देवतां प्रीणाति प्रत्यक्षाद्देवतां परिगृण्हाति, इतीशवचनम् । नन्वीश्वरस्तावन्नास्ति कुतस्तरां तद्वचनवार्ता, 'वेदाश्च भिन्नाः स्मृतयश्च भिन्ना धर्मार्थयुक्तं वचनं च भिन्नं । यस्य प्रमाणं न भवेत्प्रमाणं कस्तस्य कुर्याद्वचनं प्रमाणं' इति कश्चिद्वक्ति तत्सर्वथा विरुद्धत्वान्नादरणीयम् । तथैव ' स्वर्गः कर्तृक्रियाद्रव्यविनाशे यदि यज्वनां । तर्हि दावाग्निदग्धानां फलं स्याद् भूरि भूरुहां ॥ निहतस्य पशोर्यागे स्वर्गप्राप्तिर्यदीष्यते । स्वपिता यजमानेन तेन कस्मान्न हन्यते'

इत्याद्याः प्रत्यक्षप्रमाणैकदृष्टिना चार्वाकेण पामरेण च प्रतिपादिता उक्तयः शास्त्रबाह्यत्वात्सर्वथानादरणीया एव । तासां तमोमूलत्वात् । तथा च स्मर्यते 'या वेदबाह्याः स्मृतयो याश्च काश्च कुबुद्धयः। सर्वास्ता निष्फलाः प्रेत्य तमोमूला हि ताः स्मृताः' इति । यतः क्व दैववशाद्दावाग्निदग्धाः वृक्षाः, क्वच देशकालमन्त्रतन्त्रद्रव्यदक्षिणर्त्विक्सम्पत्सम्पन्नः, आरादुपकारकप्रयाजानुयाजपत्नीसंजायाद्यङ्गान्वितदर्शपौर्णमासादियज्वाऽऽहिताग्निर्यस्य प्रमीतस्यापि दैववशादेहालाभेऽपि पालाशप्रतिकृतिदाहे कृतेऽपि ज्ञातीनां दाहदिनादेव दशाहाशौचं स्मर्यते 'पालाशीमाहिताग्नेः प्रतिकृतिमथवास्थीनि दग्ध्वा दशाहाद्याशौचा ज्ञातयः स्युस्तत इतरनृणां त्रीण्यहान्येव कुर्युः' इति । ईदृशामाहिताग्नीनामेवावश्यं स्वर्गप्राप्तिः । तथा यागे पश्वालम्भनं यथा वेदेनोक्तं तथा यजमानेन स्वपिता हन्तव्य इति नैवोक्तं, अविधित्वात् । पशुकल्पस्तूक्त एव । अत एव विधिना तत्र हतस्यापि पशोः शास्त्रबलाद्देवतानुग्रहाच्च स्वर्गप्राप्तिः समुचिता, साप्यनवद्यैव । तथा चाग्निहोत्रं त्रिदंडयादिकं च जीविकेत्युक्तिरपि मूर्खप्रतारणैव । अस्माकं सर्वेषामास्तिकानां मोक्षगमनाय वेद एव निरपायः सुसेव्यो राजमार्गः। वेदे तु प्रवृत्तिलक्षणो धर्मश्चोपदिष्टः। तत्र प्रवृत्तिलक्षणे धर्मे वर्णाश्रमविचारोऽभिहितः। ब्रह्मचर्यं, गार्हस्थ्यं, वानप्रस्थः, संन्यास इति चत्वार आश्रमा उक्तास्तत्र गार्हस्थ्ये चित्तशुद्धिद्वारा ब्रह्मप्राप्त्यर्थमग्निहोत्रादीन्युक्तानि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः । 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इति स्मृतेः ।' सर्वापेक्षा च यज्ञादि श्रुतेरश्ववत्' इति न्यायाच्च । तथा न्यासेऽपि 'न्यास एवात्यरेचयत्' इति श्रुतेः 'नैष्कर्म्यसि०' स्मृतेः सर्वमनवद्यं । 'वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणं । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः' ॥ २९ ॥

नास्तीश इति यो वेद वेदमुज्झित्य नास्तिकः ।
कर्मानुष्ठानहीनोऽसावधो यास्यन्नसन्भवेत् ॥ ३० ॥

ईशः, धर्मप्रवर्तको लोकव्यवहारप्रवर्तकश्च परमेश्वरः, नास्तीति यो वेद, स वेदं तदुक्तधर्मं च उज्झित्य,त्यक्त्वा । अत एव कर्मानुष्ठान-हीनः । अत एव नास्ति धर्मस्तदुत्थं फलं परलोकादि च नास्तीति मतिर्यस्य सः नास्तिकः । अधो, नरकं यास्यतीति अधोयास्यन्, असन् भवेत् । ईश्वराभावे शास्तृशङ्काभावात् परलोकस्यासत्यत्वा-द्धर्मानुष्ठानाप्रयोजनाद्यथेष्टं व्यवहर्तुः शास्त्रेणासत्त्वमुक्तं । तथाहि श्रुतिः ‘ असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ’ इति ॥३०॥

‘अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ’ इत्यस्याः श्रुतेरर्थं पठति—

अस्तीश इति यो वेद वेदप्रोक्तक्रियादरम् ।
तमाहुरास्तिकं सन्तं स च मोक्षं गमिष्यति ॥ ३१ ॥

ईशः अस्ति इति यः वेद । वेदप्रोक्तासु क्रियास्वादरो यस्य तं, श्रद्धधानम् । शास्तेश्वरः,परलोकधर्मफलाद्यस्तीति मतिर्यस्य स आस्तिकस्तं सन्तं आहुर्वेदविदः । स च, स एव । मोक्षं, मुक्तिं, गमिष्यति ॥ ३१ ॥

श्रुत्यां स्मृतिषु चास्तित्वमीश्वरस्यावगम्यते ।
छन्दोगानां श्रुतौ तावदीश्वरास्तित्वमुच्यते ॥ ३२ ॥

श्रुत्यां, वेदे, जातावेकवचनं, सर्वेष्वपि वेदेषु, स्मृतिषु, मन्वादि-धर्मसंहितासु । ईश्वरस्य, परमेश्वरस्य । अस्तित्वमवगम्यते, ज्ञायते । तावत्प्रथमं, छन्दोगानां श्रुतौ सामवेदे तलवकारोपनिषदि । ईश्वरस्य प्रत्यक्षेणास्तित्वं उक्तमस्ति । तदुच्यते, मयेति शेषः ॥ ३२ ॥

अत्र वक्ष्यमाणेतिहासमूले 'ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त' इत्यत्र न देवदैत्ययुद्धमुक्तं कथमनुक्तस्य देवदैत्यरण इत्याद्युपन्यास इति चेद्बाढं, तथापि विजयस्य युद्धापेक्षितत्वाद्देवदैत्ययोः सापत्न्यात्स्वर्गार्थं युद्धप्रसिद्धिः श्रुत्यादौ, सा गुणोपसंहारन्यायेनात्रोपादेया वीररसार्थम्—

देवदैत्यरणे दैत्यान्मारयामास चेश्वरः ।
केचिद्द्विधा कृता देवैः केचिन्मध्ये विदारिताः ॥३३॥

देवाश्च दैत्याश्च देवदैत्यास्तेषां रणे, युद्धे, ईश्वरश्चेश्वर एव, च एवार्थे । दितेरपत्यानि दैत्याः असुरास्तान्, मारयामास घातयामास । मारणप्रकारमाह केचिद्दैत्याः देवैः अमरैः द्विधा कृताः । केचिद्दैत्या देवैर्मध्ये, देहमध्ये विशेषेण दारिताः भेदिताः ॥ ३३ ॥

केचिन्निकृत्तशिरसः केचिच्छिन्नपदाङ्घ्रयः ।
हस्तिवीतिरथस्थास्ते घातिता भुवि पातिताः ॥ ३४ ॥

नितरां कृत्तानि वृक्णानि शिरांसि मस्तकानि येषां ते तथाभूताः, केचिद्दैत्याः घातिताः । पादाश्चांघ्रयश्च पादांघ्रि प्राण्यंगत्वाद्द्वंद्वैकवद्भावः । छिन्नं पादांघ्रि येषां ते छिन्नपादांघ्रयः केचिद्दैत्याः घातिताः । हस्तः शुण्डाख्यावयवविशेषोऽस्ति येषां ते हस्तिनः गजास्ते च वीतयोऽश्वाश्च, रथाः स्यन्दनाश्च हस्तिवीतिरथास्तेषु तिष्ठन्तीति हस्तिवीतिरथस्थाः । हस्तिपका, निषादिनो, रथिनश्च घातिताः । केचिद् भुवि भूमौ पातिताः ॥ ३४ ॥

एकपादांसनयनाः शेरते स्म द्विधाकृताः ।
शोणितौघा ववुर्नद्यो रणसीम्नि भयङ्कराः ॥ ३५ ॥

पादश्चरणश्च, अंसो बाहुश्च, नयनं नेत्रं च, पादांसनयनं, एकं पादांसनयनं येषां ते तथा द्विधाकृताः सन्तः रणसीम्नि शेरते स्म । शोणितस्य

रक्तस्य ओघो यासां ताः अतएव भयङ्कराः भयङ्कर्यः। नद्यः, निम्नगाः। रणसीम्नि, युद्धभूमौ, ववुः ॥ ३५ ॥

सभयङ्करवीररसमुपसंहरति—

एवं सर्वान्रणे वीरान्घातयित्वेश्वरो जयम् ।
देवेभ्यः प्रददावज्ञास्त ऊचुर्जयिनो वयम् ॥ ३६ ॥

एवमुक्तप्रकारेण, सर्वान्, अशेषान, वीरान्, शूरान् दैत्यान्, घातयित्वा, देवान्निमित्तीकृत्य मारयित्वा, ईश्वरः, ईशनशीलः परमेश्वरः, देवेभ्योऽमरेभ्यो, जयं, विजयं, प्रकर्षेण ददौ । अज्ञाः ईश्वरोऽन्तर्यामी जयदातेति तत्त्वमजानन्तः, ते देवाः वयं जयिन इति परस्परं ऊचुः । तामसा एते दैत्या जगदुपद्रवकरा एव किमेभ्यो जयदानेन । तस्मात्सात्विका देवा जयिनो भवेयुश्चेज्जगत्स्वास्थ्यं भविष्यति । पापिनोऽप्यसुरा धारातीर्थमरणेन विशुद्धाः सन्तः सद्गतिं यास्यन्तीत्यभिप्रायवत्त्वात्परमेश्वरस्येशनशीलत्वम् ॥ ३६ ॥

सर्वज्ञो भगवान् गर्वं तेषां हर्तुं कृपाकरः ।
धृत्वाऽऽसेचनकं रूपं देवानामग्रतः स्थितः ॥ ३७ ॥

करोतीति करः, कृपायाः करः कृपाकरः, दयालुः । कृपाया आकर इति वा । सर्वं जानातीति सर्वज्ञः, सर्वसाक्षी । भगः, संपूर्णं षड्विधमैश्वर्यमस्यास्तीति भगवान् ईश्वरः । तेषां, देवानां, गर्वं, अभिमानं, हर्तुं, दुरीकर्तुं, आसेचनकं अतिसुंदरं, रूपं, स्वरूपं, धृत्वाऽऽदाय, देवानामिन्द्रादीनां, अग्रतः अग्रभागे, स्थितः, तस्थौ । आकरः, 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' तद्वान् । अथवा 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिं । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' इति भगवच्छब्दार्थः । आसेचनकमित्यत्रामरः 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इति ॥३७॥

अद्भुतप्रादुष्कारेण तद्रूपं निर्दिशति नेति—

न शिखोर्ध्वाग्निवत्तिर्यङ् नार्कवद्यस्य चाभितः।
दीप्तं यन्नवतां याति मनोहारि क्षणे क्षणे ॥ ३८ ॥

यस्य स्वरूपस्य, अग्निवत् ऊर्ध्वा ऊर्ध्वगामिनी शिखा ज्वाला न। यस्य च अर्कवत् तिर्यक् तिरश्चीना शिखा घृणिः रश्मिरित्यर्थः। न, नास्ति। अभितः, समन्ततः, दीप्तं, देदीप्यमानं। मनः हरतीति मनोहारि, मनोरमं, क्षणे क्षणे, प्रतिक्षणं, नवस्य भावो नवता तां अभिनवत्वं याति, गच्छति। ईदृग्रूपं देवानां विस्मयार्थं ईश्वरेण स्वां प्रकृतिं अधिष्ठाय प्रकटीकृतम्। 'घृणिज्वाले अपि शिखे' इत्युभयत्राप्यमरः। न शिखोर्ध्वेत्यत्र माघः 'गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः इति। गतं गतिः नपुंसके भावे क्तः ॥३८॥

एवं सूर्याग्निविलक्षणमपूर्वं चित्रं रूपं महामायिकेनेश्वरेण प्रकटितं दृष्ट्वा देवाश्चकिता इत्याह—

अदृष्टपूर्वमालोक्य किमेतद्यक्षमित्यमूः।
देवताश्चकिता जाता ज्ञातुं तं वन्हिमीरयन् ॥ ३९ ॥

दृष्टपूर्वं न भवतीत्यदृष्टपूर्वं, एतावन्तं कालं पूर्वमदृष्टं तद्रूपं आलोक्य, निरीक्ष्य, एतत्, पुरोवर्ति यक्षं, दैवतं, किं, इतीत्थं, अमूः, इन्द्रादयः देवा एव देवताः, स्वार्थे तल्। चकिता जाता, विस्मिता अभूवन्। ततस्ता विस्मिता देवतास्तं तादृग्रूपमीश्वरं, ज्ञातुमवगन्तुं। हव्यं वहतीति वन्हिः अग्निस्तं, ईरयन्, प्रेरयन्। अग्निर्हि देवानां दूतो मुखभूतश्च। तथा च श्रुती 'दूतो देवानामसि मर्त्यानां' 'अग्निर्वै देवानां मुखं सुहृदयतमः' इति। अतः प्रथमं स एव प्रेषित इत्यर्थः ॥३९॥

पप्रच्छागतमग्निं तं कोऽसीतीशोऽग्निराह तम्।
जातवेदा अहं वह्निः सोऽपृच्छत्तव किं बलम ॥४०॥

आगतं प्राप्तं, तमग्निं, त्वं कोसीति ईश, ईश्वरः, पप्रच्छ, पृष्टवान्।

तच्छ्रुत्वाऽग्निः तं प्रष्टारमीश्वरं, आह, प्राह । भो भगवन् । अहं जातवेदाः, जातप्रज्ञः, वह्निः, देवभागवाहकोऽग्निरस्मि । तच्छ्रुत्वा स ईश्वरः, तमपृच्छत्पप्रच्छ । हे जातवेदः, तव किं बलं विद्यते तन्मे कथयेत्यभिप्रायः ॥४०॥

अग्निराह पृथिव्यां यद्दहेयं सर्वमेव तत् ।
तच्छ्रुत्वेशो दधौ तत्र तृणं प्राह दहेति तम् ॥४१॥

अग्निरीश्वरं आह, उवाच । यद् भूतं भौतिकं च पृथिव्यां भूमौ विद्यते, तत् सर्वमेव, संपूर्णमेव, अहं दहेयं, भस्मसात्कुर्यां । इति तत्, वन्हेर्वचः, श्रुत्वा, आकर्ण्य, ईशः, ईश्वरः, तत्र, तदग्रे, एकं तृणं, शुष्कघासं, दधौ, बभार । इदं तृणं दह, भस्मीकुर्विति तमग्निं प्राह, बभाषे ॥ ४१ ॥

तद्दग्धुं न शशाकाग्निः सर्वशक्त्याऽपि लज्जितः ।
निवृत्त्येशात्सुरानेत्य प्राह यक्षं न वेद्मि तत् ॥४२॥

अग्निः, जातवेदाः, सर्वा चासौ शक्तिश्च सर्वशक्तिः तया, निखिलशक्त्या सप्तभिर्जिव्हाभिः, तत्, ईश्वरस्थापितं तृणं, दग्धुं, भस्मीकर्तुं, न शशाक, न समर्थो बभूव । ततः लज्जितः, उक्तप्रतिज्ञाभंगात् ऱ्हीतः, ईशात्सकाशात्, निवृत्य, परावृत्य, सुरान्, देवान्, एत्यागत्य, प्राह । तत्, मद्गर्वहरं, यक्षं, पूज्यं दैवतं, न वेद्मि, सर्वथाऽहं न जानामि, मच्छक्तेः परत्वात् ॥ ४२ ॥

वायुमूचुः सुरा एतज्जानीहीति तथेति सः ।
ईशं ययावपृच्छत्तमीशस्तं कोऽसि मे वद ॥ ४३ ॥

सुराः, अमराः, वातीति वायुस्तं वातमूचुः, अब्रुवन् । हे वायो, एतद्यक्षं, त्वं जानीहि, विद्धि । इति श्रुत्वा, तथेति, भवंतो यथादि-

शंति तथाऽहं करिष्यामीति, सः, देवप्रेरितो वायुः,ईशं ययौ, जगाम । ईशः, तमागतं वायुं, अपृच्छत्, पृच्छति स्म, त्वं कोऽसि, तत्, मे, मह्यं, वद, कथय । 'तिस्र एव देवता अग्निर्वायुः सूर्यः' इतिश्रुतेरग्नेरनंतरं वायुप्रेरणं समुचितम् ॥ ४३ ॥

स प्राह मातरिश्वाऽहं वायुरीशोऽवदत्पुनः ।
किं ते बलं स आहेदमादास्ये यद् भुवि स्थितम् ॥४४॥

एवं पृष्टः सः, वायुः ईश्वरं प्राह । मातरि, अंतरिक्षे, श्वयतीति मातरिश्वा, अंतरिक्षचारी वायुः वातोऽहमस्मि । तच्छ्रुत्वेशः, पुनः, मुहुः, तं वायुमवदत्, अब्रवीत् । तव, ते, बलं, सामर्थ्यं, किमस्ति तद्ब्रूहीत्यभिप्रायः । तच्छ्रुत्वा सः, वायुः आह, ईश्वरं प्रत्युवाच सः भगवन्, यत्, स्थावरं जंगमं च, भुवि, पृथिव्यां, स्थितं इदं, एतत्सर्वं, आदास्ये, अहं गृहीष्ये । ईदृग्विधं मम बलमस्तीति भावः ॥ ४४ ॥

आदत्स्वेति तृणं सोऽदादादातुं नाशकत्स तत् ।
ह्रीतो वायुः सुरान्प्राह यक्षं ज्ञातुं हि नाशकम् ॥ ४५ ॥

ततः सः, ईश्वरः, इदं तृणं, आदत्स्वेति तस्मै वायवे तृणं, शष्पं, अदाद्दत्तवान् ,ततः स वायुः, तत् तृणं,आदातुं,चालयितुमपि नाशकत्, शक्तो न बभूव । ह्रीर्लज्जाऽस्य संजाता ह्रीतः,वायुः सुरान्देवानागत्य, प्राह । हि, निश्चयेन, यक्षं, इदं पूज्यं दैवतं, ज्ञातुं, अहं नाशकम् । मदपेक्षया तस्य महाशक्तित्वात् । श्रुतिश्च 'अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव । इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन्सो अंग वेद यदि वा न वेद' । वेद यदि वा न वेदेति संशये न वेदेति तत्त्वं । तर्हि तस्य सर्वज्ञत्वभंग इति चेन्न । सर्वस्य दाहकोऽप्यग्निरात्मानं न दहतीत्येतावताग्नेर्न दग्धृत्वभंगो यथा तथा सर्वज्ञस्येश्वरस्य स्वरूपपरिच्छे-

दसंवेदनाभावेपि न सर्वज्ञत्वभंगः। वस्तुतस्तु देशतः कालतो वस्तुतश्च तद्रूपपरिच्छेदाभाव एव, आनंत्यात्, अतो नाश्चर्यं वायुनाऽसौ न ज्ञात इति ॥ ४५ ॥

ततस्ते प्रेरयन्निन्द्रं स तस्यागच्छतः सतः।
तिरोदधेऽपि तत्रेन्द्रः खिन्नस्तस्थौ सहस्रदृक् ॥४६॥

अनुक्रमेण प्रेषणीयः सूर्यः सोऽत्रेन्द्रपदेनाभिधीयते। तथा चानुक्रान्तं 'सूर्य आत्मा जगतस्तस्थुषश्च' इति। तद्विभूतयोऽन्या देवतास्तदप्येतदृचोक्तम् 'इन्द्रं मित्रं वरुणमग्निमाहुः' इति। भाष्यकृद्भिरप्येष पक्षो दर्शितः। तथापि लोकप्रसिद्धिमादायात्र देवेन्द्र एव ग्रन्थकृतोऽभिमतः। तस्थौ सहस्रदृगित्युपसंहारात्। ततः, वायुप्रत्यागमनानन्तरं, ते, देवाः, इन्द्रं प्रेरयन्। तस्य, देवप्रेरितस्येंद्रस्य, आगच्छतीत्यागच्छन् तस्यागच्छतः, संमुखमायास्यतः सतः, अनादरे षष्ठी सः, परमेश्वरः, तिरोदधे, अन्तर्हितोऽभूत। तत्र, तस्मिन् प्रदेशे, खिन्नः, यक्षभाषणाभावात् खेदमापन्नः। सहस्रं दृशो दृष्टयो यस्य स सहस्रदृक, सहस्राक्षः, इन्द्रः, देवेन्द्रः, तस्थौ, स्थितवान्। न त्वग्निवायुवत्परावृत्य देवान्प्रत्यागतः। तस्य सहस्राक्षत्वात्सहसा यक्षादर्शनं खेदास्पदमभूदतस्तत्रैव यक्षं भक्त्या चिंतयन् तत्प्राप्त्यर्थं तत्रैव स्थित इत्यर्थः ॥ ४६ ॥

अस्मदधिकोऽतिमायिक ईश्वरादन्यो नास्ति तस्मादयमीश्वर एव चेत् 'भक्त्या मामभिजानाति' इत्युक्तेर्भक्तिं पुरस्कृत्य तद्दर्शनेच्छयेहैव तिष्ठामीति निश्चयेन तत्र स्थितस्येन्द्रस्योमादर्शनं जातं। तामुमां शृङ्गाराविष्कारेण निर्दिशति सार्धद्वयेन—

नेत्रविनिर्जितशारदपद्मां नूपुरहंसरणत्पदपद्माम्।
वक्त्रविनिर्जितनिर्मलसोमां तत्र ददर्श वृषा सहसोमाम् ॥४७॥

शरदि भवे शारदे, शरत्कालीने, ते च ते पद्मे कमले च शारदपद्मे।

नेत्राभ्यां लोचनाभ्यां विनिर्जिते शारदपद्मे यया तां सुप्रसन्ननयनां। पादावेव पद्मे पादपद्मे, नुपुरे एव हंसौ श्वेतगरुतौ, नूपुरहंसौ, ताभ्यां रणतीव पादपद्मे यस्यास्तां नूपुरसिंजितयुतपादकमलां। निर्मलः कलङ्करहितंश्चासौ सोमश्चन्द्रश्च निर्मलसोमः, वक्त्रेण विनिर्जितः निर्मलसोमो यया तां प्रसादसुमुखीं। इदृशीं उमां हैमवतीम्। वृषा, वर्षतीति वृषा, इन्द्रः। तत्र, यक्षादर्शनप्रदेशे, सहसाऽकस्माद्ददर्श॥ ४७॥

तां विशिनष्टि—

वरां वधूनामपि सत्तमानां श्रिया समानां सुरदत्तमानाम्।
स्वांगैः समानां विधुतारिमानां विभ्राजमानां बहुशोभमानाम्॥ ४८॥

सत्तमानां, अतिशोभनानामपि, वधूनां, सीमंतिनीनां, मध्ये वरां, श्रेष्ठां, श्रिया, लक्ष्म्या, समानां, तुल्यां, तयोरभेदात्। सुरैर्देवैर्दत्तः मानः सत्कारो यस्यै तां, स्वस्या अङ्गानि स्वाङ्गानि, तैः कर्णनेत्रनासादिभिः, समानां, तुल्यां न तु व्यंगां। अरीणां, महिषासुरादिशत्रूणां, मानोऽभिमानः, अरिमानः, विधुतः, आकम्पितः, समुज्झितो वा अरिमानो यया तां। विशेषेण भ्राजमाना देदीप्यमाना तां। अत एव बहु बहुलं यथा स्यात्तथा शोभमानां, उमां ददर्शेति पूर्वपदसम्बन्धः॥ ४८॥

गंगाप्रवाहाभकुचाद्रिहारां दिव्यांबरां तां स नभोविहाराम्।
पप्रच्छ शक्रोऽत्र मया समक्षं दृष्टं किमेतत्कथयाम्ब यक्षम्॥४९॥

कुचौ स्तनावेव अद्री पर्वतौ कुचाद्री, तयोर्हारः मुक्तावली, कुचाद्रिहारः गङ्गायाः प्रवाहः, प्रस्रवणं गङ्गाप्रवाहः गङ्गाप्रवाह इव कुचाद्रिहारो यस्याः सा तां। दिवि भवं दिव्यं, अमूल्यं अम्बरं यस्यास्तां। नभसि आकाशे विहारो विहरणं यस्यास्तां। तां, हैमवतीं उमां।

सः, प्रसिद्धः शक्रः, पप्रच्छ, पृष्टवान् । हे अम्ब हे मातः, अत्राकाशप्रदेशे, मया इन्द्रेण, समक्षं, प्रत्यक्षं, यत् दृष्टं, व्यालोकि, एतत् , यक्षं, पूज्यं दैवतं, किं, किंनामकं । तत् मह्यं कथय, आख्यापय । नभोविहारामित्यत्र श्रुतिः 'स तस्मिन्नेवाकाशे स्त्रियमाजगाम' इत्यादिः । उमायाः विद्यारूपत्वात्तद्यक्षज्ञानं सुकरमिति मत्वेन्द्रस्तां पृष्टवान् इत्यर्थः ॥४९॥

साहेश्वरो वो बलगर्वहारि दृश्योऽभवद्योऽखिलहृद्विहारी ।
इत्युक्त इंद्रः सह दैवतैस्तं तुष्टाव तद्गर्व इयाय चास्तम् ॥५०॥

सा, उमा, इन्द्रं आह, प्राह, हे इन्द्र, यः, द्रष्टुं योग्यः दृश्यः, दृग्विषयः, अभवत् , जातः, सः वो, युष्माकं, बलं च गर्वश्च बलगर्वौ, तौ हरतीति बलगर्वहारी, सामर्थ्याभिमानपरिहर्ता, ईश्वरः, सर्वेश्वरः स्यात् । स कथंभूतः, अखिलहृत्सु, सर्वप्राणिहृदयगुहासु, विहर्तुं शीलं यस्य सः, सर्वलोकहृद्विहारी, अस्ति । इतीत्थं, उक्तः, उमया भाषितः, इन्द्रः दैवतैः, अग्न्यादिदेवैः सह तं, परमेश्वरं, तुष्टाव, अस्तौत् । तेषां देवानां गर्वः वयं जयिन इतिरूपोऽभिमानः, अस्तं लयं, इयाय, गतवान् । बलवतामपि बलं परमेश्वरः वयं वराकाः क्वेति निर्गतगर्वाः सन्तो देवाः, परमेश्वरं स्तुत्वा प्रसादयामासुः । अखिलहृद्विहारीत्यत्र स्मृतिः 'सर्वस्य चाहं हृदि संनिविष्टः' इत्याद्या । नन्वेतद्देवकीसुतस्य यादवस्य कृष्णस्य वचनं स कथं सर्वहृत्स्थो भवेदिति चेत्तावद्भाष्यकृदुक्तिरत्रोपन्यस्यते ईश्वरावताराणाममनुष्यत्वप्रतिपादनाय । 'भगवान् वासुदेवः सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन्प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यस्वरूपं ग्राहयामास । स च द्विविधोपि वैदिको धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च जगतः स्थितिकारणं प्राणिनामभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिरनुष्ठीयमानः । दीर्घेण कालेनानुष्ठातॄणां कामोद्भ-

वाह्वीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य चाभिरक्षणार्थं देवक्यां वसुदेवादंशेन किल संबभूव,ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधी-त्वाद्वर्णाश्रमधर्मभेदानां । स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां प्रकृतिं वशीकृत्याजोऽ-व्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन्लक्ष्यते स्वप्रयोजनाभावेऽपि लोकानुजिघृक्षया' इत्यादिः। अतस्तद्वचने न विगानम्। एवं श्रीदत्ता-त्रेयश्रीपादनृसिंहसरस्वतीप्रभृत्यवतारेष्वपि द्रष्टव्यं। न केवलं 'सर्वस्य चाहं हृदि' इति स्मृतिः प्रमाणभूता अपि तु श्रुतिश्च 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिः। अत्रोपन्यस्तेतिहासमूलभूता तलवकार-श्रुतिः 'ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमही-यन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति तद्धैषां वि-जज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति तेऽग्निम-ब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तमभ्य-वदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति तस्मि ँस्त्वयि किं वीर्यमित्यपीद ँ सर्वं दहेयं यदिदं पृथिव्यामिति तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमित्यथ वायुमब्रुवन्वायवेतद्वि-जानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति तस्मि ँस्त्वयि किं वीर्य-मित्यपीद ँ सर्वमाददीयं यदिदं पृथिव्यामिति तस्मै तृणं निदधावेत-दादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते

नैतदशकं विज्ञातुं यदेतद्यक्षमित्यथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेत-द्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे स तस्मिन्नेवाकाशे स्त्रियमा-जगाम बहु शोभमानामुमा ँ हैमवतीं ता ँ होवाच किमेतद्यक्षमिति ३ ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वम्' इत्याद्या ॥ ५० ॥

फलितं वदन्नुपसंहरति—

एतेन मूर्तिमत्यस्ता देवता ईश्वरास्तिता ।
स्फुटीकृता मता मान्यैरेवमन्यश्रुतिष्वपि ॥५१॥

एतेन, उपन्यस्तेन श्रौतेनेतिहासेन, ताः, इंद्राद्या देवताः, मूर्तिः, शरीरं विद्यते यासां ताः मूर्तिमत्यः, सशरीराः, इति स्फुटीकृतम् । तथा च ईश्वरस्यास्तिताऽस्तित्वं, स्फुटीकृता, साऽस्तिता, मान्यैः मन्वा-दिभिर्भाष्यकृदादिभिश्च मता । षष्ठ्यर्थे तृतीया । मान्यानां मतेत्यर्थः । एतदन्यत्राप्यतिदिशति, एवमुक्तप्रकारेण, अन्याश्च ताः श्रुतयश्च तास्वपी-दृक्स्फुटीकृतं द्रष्टव्यं । इन्द्रियप्राणसंवादवदयमर्थवाद इति न मन्तव्यं । यत उत्तरत्रास्यामेव श्रुतौ ' विदाञ्चकार ब्रह्म ' इति देवतानां ब्रह्मसा-क्षात्कारश्रवणात् ॥ ५१ ॥

श्रुत्युक्तमर्थं स्मृत्यादावतिदिशति—

एवं स्मृतीतिहासादावुक्तमेकोऽपि पंचधा ।
भूत्वा स्वाननुगृह्णाति स्वेच्छोपात्ततनुः प्रभुः ॥५२॥

एवं, उक्तप्रकारेण, स्मृतिः, धर्मसंहिता,च इतिहासो, महाभारतं,च ते आदिर्यस्य तत्स्मृतीतिहासादि तस्मिन् । आदिशब्देन पुराणानि ग्राह्याणि । उक्तं, उदितं, किं एकोऽपीश्वरः पञ्च, विधा, प्रकारो यस्य स पञ्चधा विधार्थे धाप्रत्ययः, विष्णुशिवगणेशसूर्यशक्तिरूपैः पञ्चस-ङ्ख्याको भूत्वा । स्वानां, भक्तानां, इच्छा कांक्षा स्वेच्छा, स्वेच्छया उपात्ता, स्वीकृता तनुर्देहो येन सः । प्रभवतीति प्रभुः, भक्तेष्टसंपादन-

समर्थ ईश्वरः। स्वान्, स्वकीयान् भक्तान्, अनुगृण्हाति। देहधारी चेत्तर्हि देहिवद्देहाभिमानी भूत्वा पापपुण्यभाग्भवतीतीमामाशङ्कां परिहर्तुं प्रभुरित्युक्तम्। नाटयनटनवद्देहधारणेन तदनुरूपचेष्टां कुर्वाणोऽपि प्रभुत्वान्न लिप्यते। यस्तु कर्मफलेच्छारहित ईश्वरः भक्तानुग्रहार्थं कृतकर्मभिर्न लिप्यत इति वेत्ति न तस्य कर्मलेपः, पुनः किमुतेश्वरस्य तु पापपुण्यभाक्त्वशङ्का। स्मृतिश्च 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा। इति मां योऽभिजानाति कर्मभिर्न स बध्यते' इति भगवद्वचनम्। तर्हि शिवस्य पादावन्वेष्टुं शार्ङ्गधशक्तः, पुरत्रयं सादयितुं गणेशं सोऽप्यपूजयदित्यादिना कुतो लोकाः कलहायन्त इति चेत्पञ्चानामेकात्मत्वाज्ञानादेव। न शास्त्रतत्त्वज्ञेष्वयं कलहः किं तु शास्त्रैकदेशज्ञानां मूढानामन्धानामिव व्यर्थः कलहः। 'द्विपैकदेशमालम्ब्य यथान्धा द्विपवेदिनः। अन्योऽन्यं कलहायन्ते तथाल्पज्ञानिनोऽप्यमी' इति ॥ ५२ ॥

पूर्वं स कश्यपादिभ्यो वरान्दत्वाऽप्यवातरत्।
रूपांतरेण जागर्ति कलौ कृष्णातटेऽपि सः ॥५३॥

पूर्वं कृतादौ, कश्यपः मारीच आदिर्येषां ते कश्यपादयः तेभ्यः कश्यपात्रिप्रभृतिभ्यः, अहं ते पुत्रो भविष्यामीति वरान्दत्वापि, अवातरदवतीर्णोऽभूत्। अस्तु तावत्पूर्वं, अधुनापि कलौ युगे, स, ईश्वरः, अन्यद्रूपं रूपान्तरं तेन, कृष्णायास्तटं, तीरं, तस्मिन्नृसिंहवाटिकाग्रामे जागर्ति, भक्ताभीष्टसंपादनेऽप्रमत्तो वर्तते। अपिशब्दान्मथुरायां कृष्णोऽयोध्यायां राम इत्यादि ज्ञेयम् ॥ ५३ ॥

स्वप्ने कथयति स्वेभ्यो यत्तत्सत्यत्वमेति च।
पिशाचाः पितरश्चापि गतिं यान्ति यदाश्रमे ॥५४॥

ईश्वरो नृसिंहसरस्वतीसंज्ञकः; स्वेभ्यः, स्वभक्तेभ्यः, स्वप्ने, स्वप्ना-

वस्थायां, यत्कथयति तत्सत्यत्वमेति, सत्यं भवति । यस्य, श्रीनृसिंह-सरस्वतीदत्तात्रेयस्याश्रमे, पिशाचाः, वासनाविष्टत्वेन दुर्मरणादिना च योन्यन्तरं गता भूतविशेषाः, दुर्गतिस्थाः पितरः,पूर्वजाश्च, गतिं सद्गतिं यान्ति । अपिशब्दादन्येऽपि जीवा गतिं यान्ति । यान्तीति वर्तमानक्रियया याता यान्ति यास्यन्तीति त्रैकालिकमुक्तिस्थानमिदं प्रत्यक्षप्रमाणभूतं सिद्धम् । ननु स्वप्नस्य मिथ्यात्वात्तदुक्तफलस्य कथं सत्यत्वमितिचेन्न-वप्रकारेषु स्वप्नेषु मध्ये देवपुण्यपापकृतस्वप्नस्य सत्यत्वोक्तेः । पूर्वाचार्यैरप्यभिहितं ' स्वप्ने मन्त्रोपदेशः श्रवणपरिचितः सत्य एव प्रबोधे स्वाप्ना-देवप्रसादादभिलषितफलं सत्यतां प्रातरेति' इति । यत्राश्रमे पिशाचाः स्वसम्बन्ध्यङ्गं प्रविश्य प्रमाणभूतमनुभूतं च कथयन्ति क्षणे क्षणे चामानवीर्नानाचेष्टा दर्शयन्ति च नारायणबल्यादिश्राद्धादिभिश्च गतिं यान्तीति शास्त्रोक्तानुसारिप्रत्यक्षानुभवबलेन पुनर्जन्मान्तरमवश्यमङ्गीकृत्य यथाकालं श्राद्धादि कर्तव्यमेव । 'मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणं । निर्वाणस्य प्रदीपस्य स्नेहः किं वर्धयेच्छिखां ।। मासिकादि श्राद्धदानैः प्रेतश्चेत्तृप्तिमेष्यति । विना पान्थोऽपि पाथेयं तृप्तिं यायाद्द्विजाशनैः' इत्याद्या लौकायतिकपामरप्रलापाः सुदूरतस्त्याज्याः । शास्त्रबाह्यत्वात्पान्थादितृप्त्यर्थं ब्राह्मणादिभोजनाविध्यभावात् ॥ ५४ ॥

ददातीष्टं स्वभक्तेभ्यः स चाद्यापि कलौ युगे ।
भक्ताया गोचरो जातो ब्राह्मण्या एतदुच्यते ॥५५॥

स च, स एवेश्वरः, अद्यापि कलौ युगे, स्वभक्तेभ्यः, स्वसेवकेभ्यः, भजनानुसारेणेष्टं, अभीष्टं, ददाति, समर्पयति । भक्तायाः, कस्याश्चिद्ब्राह्मण्या, ब्राह्मणपत्न्याः, गोचरो, दृग्गोचरो जातः । एतदाख्यानं उच्यते मयेति शेषः ॥ ५५ ॥

कृष्णाया उत्तरे तीरे करवीराख्यपत्तने ।
शिरोलसंज्ञकं ग्रामं भिक्षार्थं श्रीगुरुर्ययौ ॥५६॥

कृष्णायाः नद्याः, उत्तरे तीरे, कूले, करवीर इत्याख्या यस्य तत्तत्पत्तनं पुरं च तस्मिन् कोलापुरनगरे, शिरोल इति संज्ञा यस्य स शिरोलसंज्ञकस्तं ग्रामं, श्रीगुरुर्भगवान्, भिक्षार्थं ययौ, जगाम। 'यतयो भिक्षार्थं ग्रामं प्रविशन्ति' इति श्रुतेः ॥ ५६ ॥

**तत्रैको विधनो विप्रो दत्तभक्तिपरायणः।**

**तथाविधाऽपि तद्भार्या तामुद्धर्तुं ययौ प्रभुः ॥५७॥**

तत्र, शिरोलग्रामे। दत्ते विषये भक्तिर्दत्तभक्तिः तस्यां परायणः निरतः। विगतं धनं द्रव्यं यस्य स विधनः,दरिद्रः धनरहितोऽपि विशिष्टं विविधं वा धनं यस्य स विधनः एकतासमतादिस्ववित्तसम्पन्नः एकः कश्चिद्विप्रोऽभूत्। तस्य भार्या तद्भार्या,सापि तथा,दत्तभक्तिपरायणत्वलक्षणा विधा प्रकारो यस्याः सा तथाविधा, आसीत्। तां अर्थात्तत्पतिमप्युद्धर्तुं, संसारसागरात्तारयितुं, प्रभुः, भगवान्, ययौ, तद्गृहमिति शेषः। विधन इत्यत्र भारतं 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता०' ॥ ५७ ॥

ननु लक्ष्मीपतेः प्रभोरपि कुत इदं भिक्षादोहदलक्षणमित्यत आह–

**भिक्षावृत्तिर्यतेरित्थं स्वाचारेण प्रदर्शयन्।**

**स्वयं श्रीशोऽपि भिक्षुः सन्भिक्षार्थं ग्राममाविशत् ॥५८॥**

यतेः, एषणात्रयाद्व्युत्थितस्य परिव्राजः, भिक्षा, भिक्षान्नमेव वृत्तिर्जीवनं, इत्थममुना प्रकारेण, स्वस्याचार आचरणं, तेन अन्येभ्यो भिक्षुभ्यः प्रदर्शयतीति प्रदर्शयन्, स्वयं, स्वतः, श्रिया लक्ष्म्या ईशोऽपि, नियंताऽपि, वैदिकधर्मरक्षणार्थं भिक्षुर्यतिः सन्, भिक्षार्थं ग्रामं आविशत्प्रविवेश। 'यतयो भिक्षार्थं ग्रामं प्रविशन्ति' इति श्रुतिः पूर्वमेवोदाहृता। एषणात्रयादुत्थितस्य भिक्षाचर्यां वाजसनेयिन आमनन्ति 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति ॥ ५८ ॥

पंचमुद्रांकितं दंडं दक्षहस्तेन भाजनम् ।
दधानोऽन्येन शांतः स विप्रगेहं शनैर्ययौ ॥५९॥

ब्रह्ममुद्रा, धेनुमुद्रा, नागमुद्रा, शंखमुद्रा, परशुमुद्रेति पञ्च च ताः मुद्राश्च ताभिरङ्कितं चिन्हितं, दण्डं, सुदर्शनादिसंज्ञितं वैणवं दण्डं, दक्षहस्तेन, दक्षिणकरेण। भाजनं, कमण्डलुं, भिक्षापात्रं वाऽन्येन वामहस्तेन। धत्तेऽसौ दधानः, शान्तः प्रशान्तः, स, यतिवेषधारी भगवान्, शनैर्मन्दं मन्दं, विप्रस्य, ब्राह्मणस्य, गेहं, गृहं, ययौ, जगाम। 'ब्रह्ममुद्रा त्वधो धार्या' इति यथासम्प्रदायं यतिदण्डस्य पञ्चमुद्राः स्मृत्युक्ताः। भाजनं भिक्षापात्रम्। अत्र श्रुतिस्मृती भवतः 'यतयो भिक्षार्थं ग्रामं प्रविशन्त्येकपात्रा उदरपात्रा वा' इति। 'भिक्षाकाले दण्डमेकं नोदपात्रं कदाचन। कमण्डलुं च दण्डं च प्रयाणे धारयेद्यतिः' इति। यदा माधुकरी भिक्षा तदा दण्डो भिक्षापात्रं च धार्यम्। किमर्थमयमायातीति लोकशङ्कापरिहारार्थं भिक्षितान्नसंचयार्थं च पात्रधारणम्। 'माधूकरं चोपपन्नं तात्कालिकमयाचितम्' इति भिक्षाचतुष्टयमध्ये तिसृषु भिक्षासु दण्डः कमण्डलुश्च। परमहंसपरिव्राजकस्य तूदरपात्रमेव। 'पाणिपात्रोदरामत्रो मक्षिकेव न सङ्ग्रही' इति भागवतोक्तेः। शान्त इत्यत्र मुण्डकश्रुतिः 'उपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्त' इति। शनैरिति मन्दगमनं कृमिकीटपतङ्गमाक्षिकादिहिंसावर्जनार्थं। अत एवोक्तं 'दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलं। शास्त्रपूतं वदेद्वाक्यं चित्तपूतं च चिन्तयेत्' इति। चातुर्वर्णेषु भैक्ष्यमाचरन्नित्यत्र ब्राह्मणजातावेव वृत्तिभेदेन चातुर्वर्ण्यमिति सूचयितुं विप्रगेहमित्युक्तम् ॥ ५९ ॥

ॐ ३ हिमित्यारवं श्रुत्वा बहिरेत्याशु गेहिनी ॥
उर्ध्वमुत्क्रामतः प्राणान्पुनर्लब्धुमिदं जगौ ॥६०॥

आधुनिकाः संन्यासिनो भिक्षार्थं द्वारे तिष्ठन्तो नारायण इत्युच्चार-

यन्ति, उपनिषदि तु ॐ हिं ३ इत्युच्चारणीयमित्युक्तं तदनु पार्यत्रोच्यते। ॐ हिं ३ इति आरवं, शब्दं, अथवा ईषद्रावः स्वन आरवः, 'ध्वनिध्वानरवस्वनाः' 'आरवारावसंराव' इत्यमरः। तं श्रुत्वा, आकर्ण्य, गेहमस्या अस्तीति गेहिनी, गृहपतिपत्नी ब्राह्मणी, आशु, शीघ्रं, बहिरंतर्गृहाद्बहिः एत्याऽऽगत्य, वयोवृद्धस्य तपोवृद्धस्य च यतेर्दर्शनेन ऊर्ध्वं, स्वस्थानं विहायोपरिष्टात्, उत्क्रामन्तीत्युत्क्रामन्तः तानुत्क्रामतः, प्राणान् , असून्, पुनर्मुहुः, लब्धुं, प्राप्तुं, यथास्थानमानेतुमित्यर्थः। इदं, अतिथिसत्कारलक्षणं वचनं, जगौ, उवाच। आश्रित्यनेन गेहिन्या इदमेवातिथिसत्कारादि कृत्यं कर्तव्यं न तु स्वातन्त्र्यसाम्राज्यप्राप्त्याधुनिकस्त्रीवद्देवपूजाजपपुस्तकवाचनादि शास्त्राविरुद्धं कृत्यं पारतन्त्र्येण कुलीनत्वपदं गतायाः स्त्रिय इति स्फुटमेव सूचितम्। चौलान्ताः स्त्रीणां संस्काराः, उपनयनस्थाने विवाहः। गुरुकुलवासस्थाने आरजोदर्शनाच्छ्वशुरादिशुश्रूषा, तत्र श्वश्र्वाः सकाशाद्गार्हस्थ्यशिक्षणं, एवं श्रुतिरपि 'सम्राज्ञी श्वशुरेभव सम्राज्ञी श्वश्र्वां भव। ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु' इति। 'अभिशस्तपतितवर्ज्यं सव्येन व्रजन् मनःसङ्कल्परहितान् त्रीन्पञ्च, सप्त वा गृहान् भिक्षेत्, नोच्चैः शब्दं कुर्यान्न द्वारमुद्घाटयेन्न रन्ध्रेण वीक्षेत न गतं गृहं पुनर्गच्छेत्' इति सूचनार्थं ईषद्रवमित्युक्तम्। ऊर्ध्वमुत्क्रामत इत्यत्र स्मृतिः 'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते। प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते' इति। अत एवातिथिं श्रेष्ठं वाऽऽगत दृष्ट्वाऽऽशु प्रत्युत्थायाभिवादनं कुर्यात्। अभिवादनं तु पाणिभ्यां यथासव्यदक्षिणं स्वश्रोत्रे संस्पृश्य, 'वामोपरि करं कृत्वा दक्षिणं नाम चोच्चरेत्। जानुप्रभृति पादान्तं विमृज्य पदयोर्नमेत्' इति। हस्ताभ्यां गुरुपादाभिवादनं पुरुषैः कार्यं स्त्रीभिः प्रणाम एवेति ॥ ६० ॥

आगच्छतागच्छताद्य भवतां स्वागतं बृसी ॥
दत्तैषोपविशंत्वेतत्पाद्यं सत्प्रतिगृह्यताम् ॥६१॥

यूयं आगच्छतागच्छतेत्यादराद्‌द्विरुक्तिः, अद्य दिने, भवतां, युष्माकं, स्वागतं, शोभनमागमनं जातं। आसनार्थं एषा बृसी, तृणासनं, भवद्‌भ्यो दत्ता। अत्रासने भवन्तः उपविशन्तु उपवेशनं कुर्वन्तु। सत् प्रशस्तं, एतत्, पादार्थमिदं पाद्यं, पादक्षालनार्थमुदकं, भवद्भिः प्रतिगृह्यताम् ॥ ६१ ॥

यतिः प्रक्षाल्य पादौ स्वौ सुपूताद्भिः कमंडलुम् ॥
आपूर्याचम्य विधिवद्दत्तासन उपाविशत् ॥६२॥

यतिर्भगवान्, तया दत्तेन जलेन स्वौ, स्वकीयौ, पादौ, चरणौ, प्रक्षाल्य, क्षालयित्वा। सुपूताः वस्त्रपूताश्च ता आपश्च ताभिः, कमण्डलुं, कुण्डीं, आपूर्य, पर्युक्ष्य च, ततः विधिवत्, यथाविधि, आचम्य, आचमनं कृत्वा। दत्तं, ब्राह्मण्यार्पितं, च तदासनं च तस्मिन्नासने, उपाविशदुपविवेश। सुपूताद्भिरित्यत्र 'वस्त्रपूतं पिबेज्जलं' इति पूर्वमेवोक्तम्। आचमनविधिराचारार्के द्रष्टव्यः ॥ ६२ ॥

पादावनेजनीर्भिक्षोरप आदाय सा सती ॥
अभ्यर्च्याभ्युक्ष्य चात्मानं पीत्वा याता कृतार्थताम् ॥६३॥

भिक्षोः, यतेर्भगवतः, पादावनेजनीः चरणप्रक्षालनजाः, अपः, उदकानि, आदाय, गृहीत्वा। सती, पतिव्रता, सा, ब्राह्मणी, अभ्यर्च्य, तीर्थभावनया ताः सम्पूज्य। आत्मानं, स्वदेहं, अभ्युक्ष्य, प्रोक्ष्य,च। कृतः अर्थो यया सा कृतार्था तस्याः भावः कृतार्थता तां कृतकृत्यत्वं, याता, गता। शिरसा यत्पादावनेजनोदकधारणेन ब्रह्मशिवादयः कृतार्थतां याताः किमुत वक्तव्यं ब्राह्मण्या अहो भाग्यमिति ॥ ६३ ॥

स्तिमितेक्षणपात्राभ्यां यतेस्त्रैलोक्यसुंदरम् ।
रूपमापीय सुचिरं साऽतृप्तापीदमब्रवीत् ॥ ६४ ॥

ईक्षणे नेत्रे एव पात्रे चषके ईक्षणपात्रे, स्तिमिते निश्चले च ते ईक्षणपात्रे च ताभ्यां । यतेर्भगवतः । त्रयाणां लोकानां, स्वर्गमृत्युपातालानां समाहारस्त्रैलोक्यं तस्मिन्, सुन्दरं, रुचिरं, रूपं, स्वरूपं, सुचिरं, चिरकालं, आपीय, पीत्वा, दृष्ट्वेत्यर्थः । न तृप्ताऽतृप्ता, तृप्तिमप्राप्ताऽपि, सा, इदं, वक्ष्यमाणं, भगवन्तमब्रवीत् । ब्रूतेरकथितत्वाद्द्विकर्मकत्वम् । अतृप्तेत्यनेन भगवद्रूपस्यातिसौन्दर्यं कथितम् । तच्च त्रैलोक्यसुन्दरमिति मुखत एवोक्तम् । तस्या यतिरूपेक्षणतर्षत्वेऽप्यतिथिसत्कारभङ्गभिया प्रश्नप्रवृत्तिर्जातेति भावः ॥ ६४ ॥

साधूनामागमोऽस्माकं क्षेमायासक्तचेतसाम् ।
गृहान्धकूपमग्नान्नोऽनुगृह्णन्ति भवादृशः ॥ ६५ ॥

साधूनां, विदुषां ब्राह्मणानां, आगमः, अस्मद्गृहागमनं, आसक्तचेतसां, गृहाद्यासक्तमनसां, अस्माकं, क्षेमाय भवति । तर्हि तद्दर्शनार्थं कुतो न गम्यत इत्यत उक्तमासक्तचेतसामिति । तर्हि गृहासक्तचेतस्त्वे कथं मोक्ष इत्यत आह भवन्त इव दृश्यन्त इति भवादृशः महात्मानः गृहमेवान्धकूपस्तस्मिन्मग्नान् नोऽस्माननुगृण्हन्ति, अनुग्रहं कृत्वोद्धरन्तीत्यर्थः, तेषां निरुपमकरुणत्वात् ॥ ६५ ॥

गोदोहमात्रं साधूनां वसतिर्गृहमेधिनाम् ।
गृहेष्वाश्रमशुद्ध्यर्थं नित्यं संतृप्तचेतसाम् ॥ ६६ ॥

नित्यं, सन्ततं, स्वानुभवेन सम्यक्तृप्तं चेतश्चित्तं येषां तेषां, साधूनां, भवादृशां ब्राह्मणानां, गोदोह एव गोदोहमात्रं, गोदोहनकालपर्यन्तं । गृहे मेधा हिंसास्थानानि कंडण्यादीनि संति येषां ते गृहमेधिनो गृहस्थास्तेषां, गृहेषु, गृहशब्दो नित्यं पुंस्त्वे बहुत्वे च । वसतिर्निवासः, केवलं

आश्रमशुद्धयर्थमेव, न प्राणतृप्त्यर्थमिति सूचयितुं नित्यं सन्तृप्तचेतसामिति साधूनां विशेषणं समीचीनम्। 'ज्ञानामृतेन तृप्तस्य विषयैः किं प्रयोजनम्' इत्युक्तेः ॥ ६६ ॥

देवेभ्योऽपि गरीयांसः साधवो दीनवत्सलाः।
वसंति तेषु ते देवास्तुष्यंति च तदर्चनात् ॥ ६७ ॥

ननु 'कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः। क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा' इति स्मृतेर्देवा अपि भजकान् क्षिप्रमनुगृण्हन्तीति चेद्देवेभ्योऽपि साधूनां गरीयस्त्वमाह–दीनेषु, दैन्ययुक्तेषु, वत्सलाः वात्सल्येन दीनाननुगृण्हन्तः साधवः, सन्तः, देवेभ्योऽप्यमरेभ्योऽपि, अतिशयेन गुरव इति गरीयांसोऽधिकतमाः सन्ति। यतः तेषु, साधुषु, ते, देवाः वसन्ति, निवसन्ति। तेषां, साधूनां, अर्चनात्पूजनात्ते देवास्तुष्यन्ति, तोषं प्राप्नुवन्ति च। ब्राह्मण्याः स्वाभाविकवचनं श्रुतितुल्यं दृश्यते। तथा च श्रुतिः 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति' इत्यादिः। 'फलोत्कर्षापकर्षौ तु पूज्यपूजानुसारतः' इत्यभियुक्तोक्तेः 'भूतानां देवचरितं दुःखाय च सुखाय च। सुखायैव हि साधूनां त्वादृशामच्युतात्मनां। भजन्ति ये यथा देवान्देवा अपि तथैव तान्। छायेव कर्मसाचिवाः साधवो दीनवत्सलाः' इति भागवतोक्तेश्च साधूनां दीनवत्सलत्वं समीचीनमेव। अत्र साधुशब्दस्य ब्राह्मणत्वविवक्षा तस्मादत्र वेषधारिशूद्रादयो न ग्राह्याः। जितेन्द्रियाणामपि तेषां नमस्कारानर्हत्वं स्मर्यते 'दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः। दुष्टां गां संपरित्यज्य कोऽर्चेच्छीलवतीं खरीं' इति। यदि पूर्वाभ्यासवशाच्छमादिसम्पन्नाः शूद्रादयोऽपि भवन्ति चेत्तेऽन्नसमर्पणेन सत्कार्याः न पूज्याः। नमस्कारप्रकरणे मनुनाप्युक्तं 'दशवर्षातमको विप्रः शतवर्षा-

त्मको नृपः । पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता' इत्यादि । यदि त्रैवर्णिकस्थोऽपि वयोवृद्धोऽपि क्षत्रियो ब्राह्मणानामवन्द्यश्चेत् किमुत वक्तव्यं त्रैवर्णिकबाह्यः शूद्रोऽवन्द्य इति ॥ ६७ ॥

साधूनां दर्शनादेव क्षीयंते पापसंचयाः ।
प्रणामान्मंगलप्राप्तिः पूजनादव्ययं पदम् ॥ ६८ ॥

साधूनां, विदुषां ब्राह्मणानां, दर्शनादेवावलोकनादेव, पापानां, पातकानां, संचयाः, संघाताः, क्षीयन्ते, नश्यन्ति । प्रणामात्साधुनमस्कारात् , मङ्गलस्य, कल्याणस्य, प्राप्तिर्भवति । पूजनात्साधूनामर्चनात् , न व्येतीत्यव्ययं, अविनाशि, पद्यते गम्यते इति पदं, ब्रह्म, लभ्यत इति शेषः ॥ ६८ ॥

साधुपादरजांस्याधिव्याध्यापत्तिहराणि नः ।
संपत्प्रदानि संसारहराणीष्टप्रदानि च ॥ ६९ ॥

साधूनां पादसंबंधीनि रजांसि धूलयो आधिर्मानसी व्यथा च, व्याधिः रोगश्च आपत्तिर्विपत्तिश्च ताः हरन्तीति आधिव्याध्यापत्तिहराणि, भवन्तीति शेषः। तथा नोऽस्मभ्यं सम्पदः प्रददतीति सम्पत्प्रदानि । तथा नः, संसारं भवं हरन्तीति संसारहराणि। तथा नः, इष्टमभीष्टं प्रददतीत्यभीष्टप्रदानि, भवन्तीति सर्वत्र शेषः । तथाप्येते श्लोकाः 'समस्तसम्पत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः। अपारसंसार समुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः। समस्ततीर्थाम्बुपवित्रमूर्तयो रक्षन्तु मां ब्राह्मणपादपांसवः ॥ विप्रौघदर्शनात्क्षिप्रं क्षीयन्ते पापराशयः । वन्दनान्मंगलावाप्तिरर्चनादच्युतं पदं ॥ आधिव्याधिहरं नृणां मृत्युदारिद्र्यनाशनं । श्रीपुष्टिकीर्तिदं वन्दे विप्रश्रीपादपङ्कजम्' इति ॥६९॥

विप्राः श्रेष्ठा नृषु ततः कार्मिणोऽतोऽप्युपासकाः ।
भवादृशास्ततः प्राज्ञाः साक्षाद्विष्णुस्वरूपिणः ॥ ७० ॥

नृषु, मनुष्येषु मध्ये, विप्राः, ब्राह्मणाः, श्रेष्ठाः, सर्वाश्रमाधिकारित्वात् । ततः, केवलविप्रजातिभ्यः, कर्मिणः ईश्वरप्रीत्यर्थं नित्यनैमित्तिककर्मकर्तारः, श्रेष्ठाः । अतः, बहिर्मुखेभ्यः कर्मिभ्योऽपि, उपासकाः, अंतर्मुखतयेश्वरोपासकाः, श्रेष्ठाः, ततस्तेभ्य, उपासकेभ्योऽपि भवादृशाः प्राज्ञाः, वेदविदः, श्रेष्ठाः । यतो यूयं, साक्षाद्विष्णुस्वरूपिण एव । भूतान्यारभ्य ब्रह्मवादिपर्यन्तमुत्तरोत्तरश्रेष्ठत्वं गारुडेऽप्युक्तं 'भूतानां प्राणिनः श्रेष्ठास्तेभ्यो बुद्ध्युपजीविनः । बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः । कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ' इति । इदमेव संक्षिप्य ब्राह्मण्योक्तं नृष्वित्यादि । ब्रह्मज्ञं विना तु वेदवित्त्वं न संभवति तथा च स्मृतिः 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ' इति ॥ ७० ॥

विष्णोर्भगवतः साक्षाच्चरा मूर्तिर्यतिः खलु ।
संभोजनेन भवतां त्रैलोक्यं भोजितं भवेत् ॥ ७१ ॥

भगवतः, षड्गुणैश्वर्यसम्पन्नस्य । वेवेष्टि सर्वं व्याप्नोतीति विष्णुस्तस्य, यततीति यतिः संन्यासी, साक्षात्प्रत्यक्षमूर्तिरेव, खलु, निश्चितं पुराणादौ । तथा च भवतां, यतीनां, सम्यग्भोजनेन, त्रैलोक्यं,त्रिलोकी तत्स्थसर्वप्राणिवृंदमित्यर्थः । भोजितं भवेत् । यदुक्तं, 'यतिर्यस्य गृहे भुङ्क्ते तत्र भुङ्क्ते हरिः स्वयं । यस्मिन्गृहे हरिर्भुङ्क्ते तत्र भुङ्क्ते जगत्त्रयम् ' इति ॥ ७१ ॥

यतः पराङ्मुखो याति यतिस्तद्भवनं वनम् ।
सर्वथा तस्य हानिर्यद्गृहेऽनश्नन्नसेद्यतिः ॥ ७२ ॥

भिक्षामलब्ध्वा यतिर्भिक्षुः, यतो गृहात्पराङ्मुखः सन्याति, तत् भवनं, गृहं, वनं, अरण्यमेव ज्ञेयं। यस्य गृहे भवनेऽनश्नन्भुंजानः, यतिः परिव्राट् वसेन्निवसेत्, तस्य, गृहस्थस्य, सर्वथा, सर्वप्रकारेण, हानिर्भविष्यति। यतिरिति ब्राह्मणस्य ब्रह्मचारिणोऽप्युपलक्षणं श्रुतिश्च 'न स सखा यो न ददाति सख्ये स चाभुवे स च मानाय पित्वः। अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत्' इति। काठकेऽपि 'आशाप्रतीक्षे सङ्गतँ सूनृतां चेष्टापूर्ते पुत्रपशूँश्च सर्वान्। एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे' इति॥ ७२॥

पक्वान्नभिक्षुकेष्वग्र्यौ वर्णिभिक्षू तयोरपि॥
भिक्षुर्यस्मा अपि स्वल्पं दत्तं भवति तन्महत्॥७३॥

पक्वान्नस्य भिक्षुकाः अध्वगादयः, तेषु अग्र्यौ मुख्यौ। वर्णः प्रशस्तिः स्मरणकीर्तनाद्यष्टविधमैथुनाभावः प्रशस्तिरस्यास्तीति वर्णी, ब्रह्मचारी च भिक्षुश्च स्तः। तयोर्वर्णिभिक्ष्वोर्मध्येऽपि, भिक्षुः, संन्यासी, अग्र्यः, मुख्यः, यतः यस्मै, भिक्षवे, यत् स्वल्पमपि अन्नादि दत्तं, समर्पितं, तन्महत्, अधिकं, भवति। स्मरणादि तूक्तं 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणं। उत्साहोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥ एतदष्टाङ्गमैथुनं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' इति। वर्णाद्ब्रह्मचारिणीति इनिः। पक्वान्नभिक्षुकाः स्मर्यन्ते 'अध्वगः क्षीणवृत्तिश्च विद्यार्थी गुरुपोषकः। ब्रह्मचारी यतिश्चैव षट् पक्वान्नस्य भिक्षुकाः' इति। स्वल्पमित्यत्र स्मर्यते 'यतिहस्ते जलं दद्याद्भिक्षां दद्यात्पुनर्जलं। तदन्नं मेरुवत्प्रोक्तं तज्जलं सागरोपमम्' इति॥ ७३॥

एताभ्यामप्रदत्वान्नं प्रत्यवायी भवेद् गृही ॥
एतत्सर्वं विदित्वाऽपि प्रार्थयाम्यल्पधीरहम् ॥ ७४ ॥

एताभ्यां, ब्रह्मचारियतिभ्यां, अन्नं, पक्वान्नं, अप्रदत्वा। गृहमस्यास्तीति गृही, गृहस्थाश्रमी। प्रत्यवायो दोषोऽस्यास्तीति प्रत्यवायी, दोषी भवेत्। एतत् पूर्वोक्तं, सर्वं, अशेषं, विदित्वाऽपि, पत्युः सकाशाज्ज्ञात्वापि, अल्पा धीर्यस्याः सा मन्दमतिरहं, प्रार्थयामि। प्रत्यवायीत्यत्र स्मर्यते 'यतिश्च ब्रह्मचारी च द्वौ पक्वान्नस्य भिक्षुकौ। तयोरन्नमदत्वाऽपि भुक्त्वा चान्द्रायणं चरेत्' इति ॥ ७४ ॥

प्रार्थनीयमाह—

बहिर्गतानां कार्यार्थं भक्तानां गृहमेधिनाम् ॥
आश्वागमो भवेत्तावत्तिष्ठंत्वत्र दयालवः ॥ ७५ ॥

कर्तुं योग्यं कार्यं, कार्यायेदं कार्यार्थं, सांसारिककृत्यार्थं, बहिर्गृहाद्बहिः, गतानां, यातानां भक्तानां, आतिथेयानां गृहमेधिनां, गृहस्वामिनां, आशु, शीघ्रं, आगमः, आगमनं, भवेत्। यावदागमनं भवेत्तावत् दयालवः, दयाशीलाः भवन्तः, यूयं, अत्रासने, तिष्ठन्तु। बहिर्गतानामिति पूजायां बहुवचनं, बहिर्गतस्य गृहमेधिनो मम भर्तुरिति विवक्षा ॥ ७५ ॥

ननु नेदं समंजसं प्रार्थनं यतेरागमनकाल एव भिक्षा दातव्येति चेत्तत्राह—

लक्ष्यते भवतां वृत्तिर्नैव माधुकरीत्यतः ॥
प्रार्थितं रोचते यद्वस्तद्भवंतो ब्रुवंतु माम् ॥ ७६ ॥

भवतां, युष्माकं, वृत्तिः, जीवनं। मधु कृन्तति, पुष्पादाच्छिद्य गृण्हातीति मधुकरः भृङ्गः। स्वरूपेणाहर्त्वेन च मधु करोतीति मधुकरो मधुमाक्षिका, तस्येयं वृत्तिरिव वृत्तिर्माधुकरी नैव नास्तीति भवदाकारतो

लक्ष्यते । अतो हेतोः, मया प्रार्थितं तावत्तिष्ठन्तु दयालव इति । वो, भवतां, यद्रोचते, तद्भवन्तो,यूयं, मां ब्रुवन्तु, वदन्तु । माधुकरीलक्षणं स्मर्यते ' मनःसङ्कल्परहितान्गृहांस्त्रीन्पञ्च सप्त वा । सन्तोषपूर्वं भिक्षेत स्मृतं माधुकरं तु तत्' इति । यद्रोचत इत्यनेन पत्युरागमनात्पूर्वमप्यन्नं दास्य इति ध्वनितम् ॥ ७६ ॥

**इति श्रुत्वा यतिर्वाचं सौष्ठवौदार्यशालिनीम् ।**
**अस्या मद्दर्शनार्हत्वं नाधुना भर्तुरागतम् ॥ ७७ ॥**

यतिः भगवानिति, सुष्ठु भावः सौष्ठवं उदारस्य भावः धर्म औदार्यं सौष्ठवं चौदार्यं च सौष्ठवौदार्ये, ताभ्यां शालते तच्छीला सौष्ठवौदार्य-शालिनी तां, तस्या, ब्राह्मण्याः, वाचं, गिरं, श्रुत्वा, विचारयामासेति शेषः । तदेवाह, अस्याः, ब्राह्मण्याः भर्तुः पत्युः, अधुना, इदानीं-मम दर्शनं मद्दर्शनं तदर्हति योग्यो भवतीति मद्दर्शनार्हस्तस्य भाव-स्तत्त्वं, मद्दर्शनयोग्यत्वं, नागतं, न प्राप्तम् ॥ ७७ ॥

**इति मत्वा यतिः साक्षाद्धरिर्लोकगुहाशयः ।**
**श्रीदत्तो भगवान् साध्वीमिदं वचनमब्रवीत् ॥ ७८ ॥**

इतीत्थं, मत्वा लोकानां गुहा हृद्देशस्तस्यां शेते साक्षित्वेन तिष्ठ-तीति लोकगुहाशयः । यतिर्यतिरूपः भगवान्षड्गुणैश्वर्यसम्पन्नः, साक्षात्प्रत्यक्षं, स्मर्तॄणामघं हरतीति हरिः, महाविष्णुः, साध्वीं, सतीं ब्राह्मणीं, इदं, वक्ष्यमाणं, वचनं अब्रवीत् । लोकगुहाशयत्वादस्य सर्व-ज्ञत्वमिति भावः ॥ ७८ ॥

' यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः । वर्तन्ते गृहिणस्तद्व-दाश्रित्येतर आश्रमाः ' इति स्मृत्यवष्टम्भेनाह—

**मध्यान्हे बाधते नः क्षुद्व्याधिस्तस्य चिकित्सकः ।**
**गृह्यालयस्ततो दैवलब्धभिक्षा न औषधम् ॥ ७९ ॥**

प्रत्यहं मध्यान्हे, मध्यान्हसमये। नोऽस्मान् भिक्षून्, क्षुत्, बुभुक्षैव व्याधी रोगः, बाधते, व्यथयति। तस्य, व्याधेः, चिकित्सकः, प्रतिक्रियाकरो वैद्यः, गृहिणः आलयः गृहमेव। अतः, ततस्तस्माद्गेहालयात्। दैवेन विधिना लब्धा, प्राप्ता, भिक्षा दैवलब्धभिक्षा। नोऽस्माकं, औषधं, क्षुद्व्याधिशामकं भेषजं। आचार्यैरप्युक्तं 'क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन सन्तुष्यताम्' इति ॥ ७९ ॥

शरीरं व्रणवत्साध्वि भिक्षान्नं तस्य लेपनम्।
नेक्षे जितरसोऽस्वादु स्वाद्वल्पं वान्नमप्युत ॥ ८० ॥

शीर्यते तच्छरीरं, देहः, व्रणवत् अस्ति। हे साध्वि, पतिव्रते, भिक्षान्नं, तस्य, शरीरस्य, लेपनं स्मृतं। जितो रसो येन स जितरसः, वशीकृतजिव्हः, जितेन्द्रियोऽहं, अस्वादु, अमिष्टं, स्वादु, मिष्टं, उतापि अल्पं वान्नं नेक्षे। व्रणवदित्यत्र स्मर्यते 'शरीरं व्रणवत्पश्येदन्नं तस्य विलेपनम्' इति। जितरसस्यैव जितेन्द्रियत्वमुक्तं श्रीदत्तात्रेयेण यदुं प्रति 'तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान्। वर्जयित्वैकरसनां जितं सर्वं जिते रसे' इति ॥ ८० ॥

क्षुधितोस्मि भवद्गेहे पाको जातः कथं चन।
भवत्यन्नं ददात्वाशु पक्वान्नस्वामिनो वयम् ॥८१॥

अहं, क्षुत्संजाता यस्य स क्षुधितः, बुभुक्षितोऽस्मि, भवामि। भवत्या गेहं, भवद्गेहं तस्मिंस्त्वद्गृहे, कथं चन, केनापि प्रकारेण, पाको जातः, पक्तिर्निष्पन्ना। अतः भवती, आशु, शीघ्रं, अन्नं ददातु। यतः वयं, पक्वान्नस्वामिनः, 'यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ' इति पूर्वमुक्तम्। निरुक्ते च 'ब्राह्मणाय बुभुक्षितायौदनं देहि स्नातायानुलेपनं पिपासते पानीयम्' इति ॥ ८१ ॥

यत्किंचिदन्नमन्यद्वा गृहिण्या दत्तमुत्सृजेत् ।
असंतुष्टो यतिर्भिक्षुवृत्तिहा स पतेदधः ॥ ८२ ॥

यः, न सम्यक्तुष्टोऽसन्तुष्टः, यतिः भिक्षुः, गृहिण्या, गेहिन्या, दत्तं, समर्पितं, यत्किंचित्, किमपि, अन्नं, ओदनं, अन्यद्वा ग्रहणार्हं मूलं फलं दधि दुग्धं जलं सुवचनं वा, उत्सृजेत् परित्यजेत् । स, यतिः भिक्षोर्वृत्तिर्वर्तनं हंतीति भिक्षुवृत्तिहा सन्, अधः पतेत् । यतीनामधः-पातो नाम न नरकगमनं किं तु 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यास-योगाद्यतयः शुद्धसत्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमु-च्यन्ति सर्वे' इति कैवल्यनारायणोपनिषदुक्तक्रममुक्तिं विहाय ब्रह्म-लोकादधस्ताद्दोषतारतम्येन तपआदिषु त्रिषु लोकेषु पतनं । ब्रह्मलोकात्पु-नरावृत्तिः स्मर्यते 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इति । मुक्तस्य तु नष्टरागत्वान्न विधिनिषेधगोचरत्वम् । नापि लोकान्तर-गामित्वं 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतेः । केचन स्वैरचारिण आधुनिका वयं मुक्ता ब्रह्मज्ञा इत्यभिमन्यन्ते ते बद्धा एव । 'यदि मन्यसे सुवेदेति' 'यस्या-मतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमवि-जानताम्' इत्युक्तेः । यो भोक्तुकामो भोक्तुमुपविष्टोऽप्यलमिति सिंह-नादेन व्यर्थं रात्रीति स बुभुक्षया पीडति चेत्तेनान्नदातुः का विनष्टिः न कापि ॥ ८२ ॥

सा ब्राह्मणी यतिं प्राह—

साह सूनादोषहरवैश्वदेवः कृतो न हि ।
तथापि वैश्वदेवार्थमुद्धृत्यान्नं ददामि वः ॥ ८३ ॥

सूनाः, पंच सूनाः, हिंसास्थानानि, तेभ्यो जाता दोषाः सूनादोषा-स्तान्हरतीति सूनादोषहरः, स चासौ वैश्वदेवश्च सूनादोषहरवैश्वदेवः,

वैश्वदेवाख्यो यज्ञः, अद्यापि यजमानेन न हि कृतः। तर्हि गृहान्तरं गमिष्यामीत्यत आह–तथापि, वैश्वदेवार्थं स्थाल्याः पात्रान्तरेऽन्नमुद्धृत्य, वः युष्मभ्यं, सिद्धमन्नं ददामि। 'कण्डणी पेषणी चुल्ली उदकुम्भी च मार्जनी। पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति' इति सूनाः स्मृताः। तद्दोषपरिहारार्थं यज्ञत्रयोपेतं वैश्वदेवमनुष्ठाय यज्ञशिष्टाशिनो दोषैर्न लिप्यन्ते। स्मर्यते च 'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः। भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्' इति। वैश्वदेवार्थमुद्धृत्येति साधूक्तं वैश्वदेवाकरणदोषो यतिभोजनेन नश्येत्परं वैश्वदेवो यतिपराङ्मुखजन्यदोषं न निवारयेत् ॥ ८३ ॥

यावनालयवागूर्मे कृता पात्रं गृहे न हि।
क्षणं भवन्तस्तिष्ठन्तु पत्राण्याश्वाहराम्यहम् ॥ ८४ ॥

यावनालानां धान्यविशेषाणां यवागूः, मे, मया, कृता, रचिता। सैव दीयतामितिचेत्तत्राह–पात्रं, भोजनपात्रं, गृहे, आलये, न हि विद्यते। अतो भवन्तः, क्षणं, क्षणमात्रं, तिष्ठन्तु, निवसन्तु। अहं आशु, त्वरितं, पत्राणि, पर्णानि, आहरामि, आनयामि। यवागूलक्षणमुक्तं वैद्यके 'यवागूः षड्गुणजले रचिता विरलोदना' इति ॥ ८४ ॥

तच्छ्रुत्वानीय देहल्या यतिरेकां महाशिलाम्।
मण्डलं कारयामास चतुष्कोणं गृहेऽम्भसा ॥ ८५ ॥

तत्, ब्राह्मण्या वचनं, श्रुत्वाऽवधार्य, यतिः, भगवान्। देहल्याः, गृहांगणात्सकाशात्, एकां महती चासौ शिला च भोजनार्हा दृषत्, तां आनीय, गृहमानीय। गृहे, गृहमध्ये, अम्भसा, जलेन, चत्वारः कोणा यस्य तच्चतुष्कोणं, चतुरस्रं, मण्डलं कारयामास स्वतः करणस्याविहितत्वाण्णिच् ॥ ८५ ॥

संस्थाप्य प्रोक्षितां तत्र कमण्डलुजलेन ताम् ।
लिखित्वाऽष्टदलं तत्र सतारं ब्राह्मणी जगौ ॥ ८६ ॥

तत्र, मण्डले, कमण्डलुजलेन, कमण्डलुस्थेनोदकेन, प्रोक्षितां अभ्युक्षितां, तां, शिलां, संस्थाप्य, तत्र, शिलोपरि, संसारात्तारयतीति तारः, ॐकारस्तेन सहितं सतारं, सप्रणवं, अष्टौ दलानि यस्य तदष्टदलं, चक्रं लिखित्वा, विलिख्य, ब्राह्मणी, जगौ, उवाच ॥ ८६ ॥

सत्पात्रे भवती भिक्षां ददात्विति सती वचः ।
श्रुत्वा चक्रे शिलापात्रे यवागूपरिवेषणम् ॥ ८७ ॥

सत्प्रशस्तं च तत्पात्रं भाजनं च तस्मिन्, अथवा उत्तमयोग्ये, अथवा पाति सर्वानर्थेभ्यो रक्षतीति पाता, सतां सन्मार्गवर्तिनां पाता सत्पाता, तस्मै मह्यं, भवती भिक्षां ददातु, इतीत्थं, वचः, यतिवाक्यं, श्रुत्वा सती, ब्राह्मणी, शिलापात्रे, शिलारूपे भाजने, यवाग्वाः परिवेषणं, दानं, चक्रे, कृतवती । 'अतिथिः सर्वरक्षकः' इति वचनस्मरणार्थं सत्पात्र इत्युक्तिः ॥ ८७ ॥

गृहीतापोशनो भिक्षुरूपी स भगवान् स्वयम् ।
प्राणाग्निहोत्रपूर्वं तां यवागूं भोक्तुमारभत् ॥ ८८ ॥

गृहीतं आपोशनं येन स तथा । भिक्षुरूपी, स्वयं भगवान्षड्गुणैश्वर्यसम्पन्नः, स, दत्तात्रेयः । प्राणाग्निहोत्रपूर्वं, 'श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि' इति प्राणाहुतिपूर्वकं, तां, तया परिविष्टां यवागूं, भोक्तुं, अशितुं, आरभत्, आरेभे । भगवतः प्राणाग्निहोत्रेण भगवत्स्वरूपस्थसर्वप्राणिवर्गप्राणतृप्तिर्जातैव ॥ ८८ ॥

यजमानोऽपि साध्वर्युरायसस्रुवधृग्जगौ ।
याज्यानुवाक्यासुबृहत्सामप्रतिनिधीनमून् ॥ ८९ ॥

यजतेऽसौ यजमाना, विचित्रेष्टिकर्त्री, सा, ब्राह्मण्यपि, अध्वर्युः, स्वयमेवाध्वर्युसंज्ञकर्त्विग्भूत्वा, आयसस्रुवं धरतीत्यायसस्रुवधृक्, आयसदर्वींधरा सती, याज्या च अनुवाक्या च सुबृहत्साम च तत्प्रतिनिधिभूतान्, अमून्, वक्ष्यमाणश्लोकान्, जगौ, वक्ति स्म। अत्र गृहं यज्ञशाला। भगवदासनं विहारः। त्रेतास्थानीयः स्वयं भगवान्। 'द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः' इत्युक्तत्वाद्यवाग्वा द्रवरूपत्वात् तद्दानार्थं समयानुसारेणोपलब्धायसदर्वी स्रुवः। स्वप्राधान्येन स्वयं यजमाना, हस्तोपाधिप्राधान्येनाध्वर्युः, वाक्प्रधान्येन होतोद्गाता, मनोरूपेण ब्रह्मा, श्रोत्ररूपेणाग्नीध्रश्च, भूत्वा श्रद्धया साक्षाद्भगवते, यथेष्टं यवागूहविर्जुहोति स्म। तत्र याज्यानुवाक्याबृहत्सामप्रतिनिधित्वेन त्रीन् श्लोकान् जगौ। तत्र बृहत्साम्नः 'बृहत्साम तथा साम्नां' इति भगवद्विभूतित्वज्ञापनार्थं सुष्ठुत्वद्योतनाय च सुबृहदित्युक्तम्। बृहत्साम च 'त्वामिद्धि हवामहे' इत्यनेन सर्वात्मत्वेनेन्द्रो गीतस्तत्प्रतिनिधिभूतं श्लोकं विदुरस्य गृह इति वक्ष्यतीत्येवं तया विचित्रेष्टिः कृतेति कवेराशयः॥ ८९॥

अनुवाक्यास्थानीयोऽयं श्लोकः —

उपविश्य सुखं स्वस्थचित्तैश्चापेक्षितेदृशी।
ग्राह्या यवागूर्भोक्तव्या कामं त्याज्याऽनपेक्षिता॥९०॥

स्वस्थं, समाहितं, चित्तं येषां तैः, भवद्भिः सुखं, यथा तथोपविश्य ईदृशी अपेक्षिता, यवागूः, ग्राह्या, कामं, पर्याप्तं, यथा तथा भोक्तव्या, अनपेक्षिता चेत्त्याज्या॥ ९०॥

याज्यास्थानीयोऽयं श्लोकः —

भवन्तः क्व दरिद्राः क्व वयमस्मिन्दिने त्वियम्।
यवागू रचिताऽथापि स्वीकुर्वंतु कृपाकराः॥ ९१॥

भवन्तः, समर्थाः, क्व, कुत्र। तथा दरिद्राः, दुर्गताः, वयं, क्व। दैववशाद्भवतां अद्यैवागमनं तथास्मिन् दिने, दिवसे, तु इयं, ईदृशी, यवागूः, रचिता, अथापि कृपाकराः, दयाकराः, भवन्तः इमां स्वीकुर्वन्त्वित्युक्त्वा पुनः पुनरादरेण ददौ॥ ९१॥

सुबृहत्सामस्थानीयोऽयं श्लोकः —

**विदुरस्य गृहेऽपि तन्मुदे कमलेशोऽपि कणान्नमाददे।**
**स यथाद्य तथा मयाऽर्पितं सुकदन्नं भगवद्भिरादृतम्॥९२॥**

दासीपुत्रस्य विदुरस्यापि, गृहे, तन्मुदे, तत्प्रीतये, स लोकप्रसिद्धः, कमलायाः लक्ष्म्या ईशोऽपि, श्रीपतिरपि, यथा कणान्नं, आददे, जग्राह, अशितवानित्यर्थः। तथा तेन प्रकारेण, मया अर्पितं, दत्तं, सुतरां कदन्नं, भगवद्भिः, समर्थैः, आदृतं, स्वीकृतम्॥ ९२॥

**स्तुत्वैवं साऽऽदरेणादाच्छश्वद्भगवते हविः।**
**तया संपादितं यत्तदाहिताग्नेः सुदुष्करम्॥ ९३॥**

एवमुक्तप्रकारेण, स्तुत्वाऽभिष्टूय, सा, ब्राह्मणी, आदरेण, शश्वत् पुनः पुनः, हविः, यवाग्वाख्यं हविर्द्रव्यं, भगवते, सर्वात्मने दत्तात्रेयाय, अदात्, दत्तवती। तया, ब्राह्मण्या, यत् पुण्यं, सम्पादितं, तत्पुण्यं कृत्यं वा, आहिताः स्थापिता अग्नयो येन स आहिताग्निरग्निहोत्री, तस्यापि, सुतरां दुःखेनापि कर्तुमशक्यं सुदुष्करं स्यात्। कदन्नस्य हविष्ट्वं कथमिति चेत् ज्ञानाग्निहोत्रे विद्वान् 'यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानम्' इति श्रुतम्। किमुत पुनर्नित्यमुक्तस्य वशमायस्य भगवतोऽशनस्य हविष्ट्वमिति॥ ९३॥

आहिताग्नेः सुदुष्करमित्युक्तमुपपादयति —

**यद्याहिताग्निः प्रमितां यवागूं ददाति तर्ह्यग्निमुखेभ्य एव।**
**साक्षान्न विष्णोर्वदने त्वियं तु साक्षात्प्रकामं परमाय चादात्॥ ९४॥**

यदि, यर्हि, आहिताग्निः, त्रेताग्निमान्, प्रमितां स्रुक्प्रमितां, नाधिकां तामपि सकृदेव, यवागूं ददाति, कर्हिचित्पर्वणि समर्पयति, तर्हि अग्निर्मुखं अग्न्यादयो वा देवास्तेभ्य एव ददाति, परंतु न साक्षाद्विष्णोर्वदने। तस्य साक्षाद्विष्णोर्वदने दातुमशक्यत्वात्। इयं, महाभागा ब्राह्मणी तु, तुशब्दो वैलक्षण्यद्योतनार्थः। साक्षात्प्रत्यक्षं, परमाय, विष्णवे, प्रकामं च, हस्तप्रसारणपूर्वकं अलमलं आतृप्तिपर्यन्तं भुक्तोस्मीतः परं मा समर्पयेति भगवता प्रत्याख्याताऽपि एतावद्गृहीतव्यमेतावद्गृहीतव्यमिति पर्याप्तमेव। चशब्द एवार्थः, अदाद्दत्तवती। 'पयसा वा यवाग्वा वा स्वयं पर्वणि जुहुयात्' इत्युक्तेः कदाचित्सक्रुत्स्रुवमितां ददाति तदप्यग्निमुखेभ्य एव। इयं तु साक्षात्परमायेतिव्यतिरेकः। परमो विष्णुः 'अग्निर्वै देवानामवमो विष्णुः परमः' इति श्रुतेः ॥ ९४॥

तृप्तो हरिः शुद्धकरास्यपाद आचम्य तत्रांतरधान्न वेद।
वेदोऽस्य चेष्टां जयतीष्टकर्ता स सेवकस्यारमरिष्टहर्ता ॥९५॥

यवागूप्राशनेन तृप्तः हरिः, शुद्धकरास्यपादः, प्रक्षालितहस्तमुखचरणः, अप आचम्य, तत्रैव स्थानेऽतरधात्, तिरोहितोऽभूत्। वेदोऽपि, श्रुतिरपि, यस्य चेष्टां, साक्षान्न वेद, स भक्ताभीष्टकर्ता जयति, भक्तानुग्रहलक्षणेन कर्मणा परमोत्कर्षेण वर्तते ॥ ९५ ॥

ननु भुक्तस्तृप्तोऽपि भगवान् ब्राह्मण्यै आशिषोऽदत्वैव कथमन्तरधादित्यत आह—

अतितृप्तस्य भुक्तस्य किं प्रयोजनमाशिषः!
पीडितस्यापि शांतस्य किं प्रयोजनमुद्रुषः ॥ ९६ ॥

सत्कारगौरवादिनाऽतितृप्तस्य, हृष्टस्य, भुक्तस्य, कृतभोजनस्यातिथेः आशिषः, आशीर्वादस्य, प्रयोजनं किं, न किमपि। निर्भर्त्सनगालिप्रदानादिना पीडितस्य, बाधितस्य, शान्तस्य, सहनशीलस्यापि, अतिथेः, उद्गता चासौ रुट् च उद्रुट् तस्याः, शापादिरूपेण बहिर्निर्गतस्य

कोपस्य, किं प्रयोजनं, न किमपीत्यर्थः। एवं सामान्यातिथेः भुक्तस्य तु द्वौ दायादौ श्रूयेते 'उपयन्ति सुहृदः पुण्यकृत्यां द्विषन्तः पापकृत्यां' इति। तस्माद्भूतिकामेन ज्ञानी महाफलप्रदत्वात्संपूज्य एवेति श्रूयते मुण्डके 'यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान्। तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इति भगवतस्तु भक्तवात्सल्यं किमु वक्तव्यम् ॥ ९६ ॥

गृहमेत्य गृहेशोऽथ सर्वं श्रुत्वा विलोक्य तत्।
करशाखांकितं पात्रं हृष्टोऽपि स्वमगर्हयत् ॥ ९७ ॥

अथ, भगवदन्तर्धानानंतरं, गृहस्य ईशः पतिर्ब्राह्मणः, गृहं, स्वालयं, एत्यागत्य, सर्वं, भगवदागमनादिकं, श्रुत्वाऽवधार्य, तत्, शिलामयं, करस्य हस्तस्य शाखा अंगुलयस्ताभिरङ्कितं, चिन्हितं, पात्रं, भोजनभाजनं, दृष्ट्वा, निरीक्ष्य च, हृष्टोऽपि, प्रमुदितोऽपि, भगवद्दर्शनालाभात् स्वमात्मानं मन्दभाग्यं अगर्हयत्, धिङ्मामित्यकुत्सयत् ॥ ९७ ॥

अहो ! स्त्रीणां कुहाचारः क्वाधीतं क्वाप्यनुष्ठितिः।
अथापीशप्रसादोऽभूद्धन्योऽहं हीदृशा स्त्रिया ॥ ९८ ॥

अहो इत्याश्चर्ये। स्त्रीणां, नारीणां, आचार, आचरणं सन्ध्योपासनादिकं कुह, क्व। अधीतं, वेदाध्ययनं, क्व। अनुष्ठितिर्जपानुष्ठानादिरपि, क्व, कुत्र। सर्वथा किमपि नास्तीति भावः। अथाप्येवं वर्तमानाया अपि, स्त्रियाः, ईशस्येश्वरस्य, भगवतो दत्तात्रेयस्य, प्रसादः, प्रसन्नताऽभूत्, आसीत्। न मन्दभाग्यस्य ममेदृशः प्रसादो जातः। अथापि, इयमिव दृश्यत इतीदृक् तया ईदृशा, एतादृश्या, सम्प्राप्तभगवत्प्रसादया, स्त्रिया, जायया, अहमपि, धन्यः कृतार्थोऽभवं। अर्धांगत्वात् ॥ ९८ ॥

प्राक्पुण्येन महद्दृष्टिर्जाताद्यानंदवर्धिनी।
भावि श्रेय इतोऽग्रेऽपि या त्रिकालेष्टसूचिका ॥ ९९ ॥

प्राक्पुण्येन, पूर्वसुकृतेन, महतां समर्थानां भगवतां दृष्टिर्दर्शनं, जाता। एवं भूतकालीनं पुण्यं जातमिति ज्ञायते। वर्तमानकालेऽपि पुण्यातिशयत्वं सूचयतीत्याह सा दृष्टिः, अद्य, वर्तमानकाले, दर्शनस्य पुण्यातिशयत्वात् आनंदं परमसुखं, वर्धयतीत्यानंदवार्धिनी। इतः,दृष्टेः, भगवद्दर्शनात्, इतः परमग्रे, भविष्यकालेऽपि, श्रेयो, निश्रेयसं, भावि, इति या भगवद्दृष्टिः त्रिकालेषु भूतभविष्यद्वर्तमानकालेषु, इष्टं, इष्टप्राप्तिहेतुभूतं पुण्यातिशयं, सूचयति, ज्ञापयतीति त्रिकालेष्टसूचिकाऽस्ति। अत एव केनापि रूपेणागतोऽतिथिर्भगवद्भावनया सत्कार्य एव ॥ ९९ ॥

ननु शान्तश्चेत्सत्कार्य इति चेत्तत्राह—

घ्नन्तं शपन्तं परुषवाचमप्यतिथिं मुदा।
अर्चेदीशधियाऽतुष्टमपीशस्तेन तुष्यति ॥ १०० ॥

घ्नन्तं, ताडयन्तं, शपतीति शपन् तं। परुषा वाक् वाणी यस्य तं। अतुष्टं असंतुष्टमपि, अतिथिं, न विद्यते तिथिर्यस्य तं, मुदा, आनन्देन। अयं ईश इति धीः ईशधीस्तया, ईश्वरबुद्ध्या, अर्चेत्पूजयेत्। तेन ईश्वरबुद्ध्याऽतिथिपूजनेन, ईशस्तुष्यति तोषं प्राप्नोति ॥ १०० ॥

इत्युक्त्वा धाम्नि तत्पात्रं सोऽभ्यर्च्याप्यभवत्कृती।
अद्यापि तत्र तत्पात्रमस्तीशांगुलिचिह्नितम् ॥ १०१ ॥

इतीत्थं, उक्त्वाऽऽभाष्य। धाम्नि, गृहे, तत्पात्रं, भोजनपात्रं, अभ्यर्च्य, प्रत्यहं त्रिकालं संपूज्य, सोऽपि ब्राह्मणः, कृती, कृतकृत्योऽभवत्। अद्यापि, वर्तमानकालेऽपि, तत्र, विप्रगृहे, ईशस्य, भगवतोऽगुलिभिश्चिन्हितं, तत्पात्रं, अस्ति विद्यते ॥ १०१ ॥

ततःप्रभृति तद्वंशो रमाक्रीडो बभूव ह।
एवमद्यापि तद्वाचा भजतां गोचरः प्रभुः ॥ १०२ ॥

ततः प्रभृति, भगवत्प्रसादकालमारभ्य, तस्य विप्रस्य वंशोऽन्वयस्तद्वंशः, रयाया लक्ष्म्या आक्रीड उद्यानमिव बभूव। ग्रन्थमुपसंहरति–एवमुक्तप्रकारेण तस्येश्वरस्य वाक् तद्वाक् तया, श्रुतिमार्गेणेत्यर्थः। भजन्ति ते भजन्तः तेषां सेवकानां, प्रभुरीश्वरः, गोचरः भविष्यत्येव ॥ १०२ ॥

श्रीदत्तप्रेरितमतिर्वासुदेवसरस्वती ।
कुमारशिक्षां पौरस्त्यां कुमारस्य धरेऽकरोत् ॥१०३॥

अस्या वार्तायाः दर्शनाभावेऽपि याथातथ्येन श्रवणमपि न जातं अथापि श्रीदत्तेन, दत्तात्रेयेण, भगवता प्रेरिता मतिर्यस्य स श्रीदत्तप्रेरितमतिः, वासुदेवसरस्वती, एतत्संज्ञितः कश्चिद्दत्तात्रेयभक्तो यतिः, पौरस्त्यां प्राथमिकां कुमारशिक्षां, एतन्नामकं ग्रन्थं, कुमारस्य, षडाननस्य, धरे, कारनाटकदेशस्थे पर्वते, अकरोद्व्यरचयत् ॥ १०३ ॥

पद्वाक्यप्रमाणज्ञा नित्यं पक्वान्नभोजिनः ।
तावत् कुमारशिक्षेयं बालानां प्रातराशवत् ॥ १०४ ॥

पद्वाक्यप्रमाणज्ञाः, व्याकरणतर्कमीमांसाभिज्ञाः, नित्यं, प्रत्यहं, पक्वान्नं भोक्तुं शीलं येषां ते पक्वान्नभोजिनः, कामं सन्तु। इयं कुमारशिक्षा, तावत्, प्रथमतः, अव्युत्पन्नानां प्रातराशवत्, प्रातःकालीनाल्पभोजनवत्, अस्तु ॥ १०४ ॥

भार्गवीबाहुदानद्योः सङ्गमो यत्र यत्र च।
तीर्थं हत्याहरं चापि त्रेतेश्वरगदाधरौ ॥ १ ॥
तत्रेयं रचिता टीका कुमाराणां हिताय वै ।
अनेन प्रीयतां देवो भगवानत्रिनन्दनः ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवानन्दसरस्वतीप्रणीता कुमारशिक्षा समाप्ता ॥

॥ श्रीदत्तात्रेयार्पणमस्तु ॥

---

श्रीगणेशदत्तगुरुभ्यो नमः ।

श्री. प. प. श्रीवासुदेवानन्दसरस्वतीस्वामिविरचिता

# युवाशिक्षा

॥ श्रीगणेशदत्तगुरुभ्यो नमः ॥

श्री. प. प. वासुदेवानन्दसरस्वतीस्वामिविरचिता

# युवशिक्षा



भजेऽबुजाक्षं सततं जिताक्षं दग्धाघकक्षं धृतभक्तपक्षम् ।
भैक्ष्यान्नभक्षं कृतधर्मरक्षं दक्षं सुशिक्षं सुतितिक्षयक्षम् ॥ १ ॥

सृष्ट्यादिहेतो वरधर्मसेतो स्वयं त्वहेतो कृतभूरिमन्तोः ।
नान्यो नियन्तोद्गतिदश्च जन्तोः सन्तोऽत्र सत्साक्षिण उच्चकेतो ॥२॥

लीलाकैवल्यमीशस्य सर्वज्ञस्यांशकर्मणाम् ।
सापेक्षत्वाच्च वैषम्यनैर्घृण्ये फलदस्य न ॥ ३ ॥

दृष्टे स्वस्याप्यनीशत्वे सुखादेः पारतंत्र्यतः ।
न सर्वज्ञेश इत्युक्तिर्माता वंध्या ममेतिवत् ॥ ४ ॥

अचिंत्यरचनाभिज्ञा यच्छक्तिस्तं स्वकर्मभिः ।
तोषयेत्तत्प्रसादाद्धि विमुक्तः स विमुच्यते ॥ ५ ॥

तावत्कर्माचरेद्यावद्देहादौ माययात्मधीः ।
आपाततः स नियतं प्रत्यवायजिहासया ॥ ६ ॥

अग्निहोत्रादिकर्म स्वःसाधनीभूतमेव तत् ।
ज्ञानोद्देशकृतं ज्ञानसाधनीभूतमक्षयम् ॥ ७ ॥

अग्नीन्धनाधिकरणे ज्ञानं कर्मानपेक्षकम् ।
उक्तमन्यत्र तु परंपरया मुक्तिसाधनम् ॥ ८ ॥

ततः प्रमाणबलतो मुमुक्षुर्नियतं चरेत् ।
ईशप्रीत्या अनासक्त्या तद्योगारूढतावधि ॥ ९ ॥

अपौरुषेयं यद्ब्रह्म सद्धर्मप्रतिपादकम् ।
महाभूतसमुत्पन्नं प्रमाणं वेद उच्यते ॥ १० ॥
विरोधो वाचा विरूपनित्ययेति गिरेति चेत् ।
न हि सा गीर्मता गौणी नित्यत्वं पूर्वसाम्यतः ॥ ११ ॥
अथापि पौरुषेयत्वं प्रवक्तुं नैव शक्यते ।
तस्योपलभ्य रचितत्वानंगीकारतः खलु ॥ १२ ॥
अर्थवादपरत्वात्तु वाचेति नित्यताश्रुतेः ।
अपि सूत्रकृता वेदोत्पत्तिश्रुत्यनुरोधतः ॥ १३ ॥
शास्त्रयोनित्वादितीशसर्वज्ञत्वेऽपि सूत्रितम् ।
निःश्वासवदनायासाद्वेद ईशाद्विनिर्गतः ॥ १४ ॥
अपौरुषेयो विज्ञेयः प्रमाणं ताद्धि नो महत् ।
वेदः स चेदृशो मंत्रब्राह्मणात्मक उच्यते ॥ १५ ॥
स्मृतं ब्राह्मणकांडान्तर्गतमारण्यकं तथा ।
अनुष्ठानहेतुभूतद्रव्यदेवप्रकाशकाः ॥ १६ ॥
मंत्रा ऋगादिभेदेन त्रिविधाः परिकीर्तिताः ।
स्युः पादबद्धगायत्र्यादिछंदोलक्षिता ऋचः ॥ १७ ॥
ज्ञेया गीतिविशिष्टास्ता एव सामानि शिक्षया ।
यजूंषि तूभयविलक्षणानीह विचक्षणैः ॥ १८ ॥
संबुद्धिरूपा निगदा यजुरन्तर्गता अपि ।
ब्राह्मणं त्रिविधं तत्र प्रथमं विधिरूपकम् ॥ १९ ॥
द्वितीयमर्थवादाख्यं तृतीयं तद्विलक्षणम् ।
भाट्टा आहुर्विधिं शब्दभावनां च नियोगकम् ॥ २० ॥
प्राभाकरास्तार्किकाद्या इष्टसाधनतेति च ।
उत्पत्तिरधिकारश्च विनियोगः प्रयोगकः ॥ २१ ॥

एवं चतुर्विधो ज्ञेयो विधिर्ज्ञातुरभीष्टदः ।
देवताकर्मस्वरूपमात्रबोधक एव यः ॥ २२ ॥
आग्नेयोष्टाकपालो हीत्यादिरुत्पत्तिरुच्यते ।
सेतिकर्तव्यताकस्य करणस्याधिकारकः ॥ २३ ॥
यागादेः फलसंबंधबोधकस्तदुदाहृतिः ।
स्वर्गकामो दर्शपूर्णमासाभ्यां यजतीति हि ॥ २४ ॥
विनियोगोंऽगसंबंधबोधकस्तदुदाहृतिः ।
समिधो यजतीत्यादिः प्रयोगश्च चतुर्थकः ॥ २५ ॥
अंगप्रधानाख्यकर्मप्रयोगैक्यावबोधकः ।
विधित्रयान्वितः श्रौतमूचुः कल्पं च केचन ॥ २६ ॥
इमं विद्वान् तथा कर्मस्वरूपं फलभाग् भवेत् ।
कर्मस्वरूपं द्विविधं गुणकर्मार्थकर्म च ॥ २७ ॥
क्रतुकारकयुक्तं यद्विहितं गुणकर्म तत् ।
चतुर्धोत्पत्तिविकृतिसंस्कृतिप्राप्तिभेदतः ॥ २८ ॥
यूपं तक्षत्यादधीत वसंतेऽग्नीनितीह तु ।
तक्षणाधानसंस्काराख्यविशेषविशिष्टता ॥ २९ ॥
यूपाग्न्यादेः स्मृतोत्पत्तिरेवमुन्नेयमन्यतः ।
सोमं सुनोति व्रीहींश्चावहन्ति विकृतिस्त्विह ॥ ३० ॥
तयोः क्रमादभिषवावघाताभ्यां प्रकीर्तिता ।
व्रीहीन् प्रोक्षति पत्न्याज्यं वीक्षते त्विह चानयोः ॥ ३१ ॥
प्रोक्षणेक्षणतः प्रोक्ता विशिष्टा संस्कृतिः खलु ।
गां पयो दोग्धि स्वाध्यायोऽध्येतव्योऽत्राप्तिरुच्यते ॥ ३२ ॥
दोहनाध्ययनाभ्यां च पयआदेः सतो मता ।
एतच्चतुष्टयं त्वंगमंगिनः कथितं क्रतोः ॥ ३३ ॥

यत्कारकाण्यनाश्रित्य विहितं चार्थकर्म तत् ।
अंगं प्रधानमिति च द्विविधं परिकीर्तितम् ॥ ३४ ॥
अनन्यार्थं प्रधानं चान्यार्थमंगं च तद् द्विधा ।
सन्निपत्योपकार्यारादुपकारकभेदतः ॥ ३५ ॥
आद्यं प्रधानस्वरूपनिर्वाहकमिति स्मृतम् ।
संप्रोक्षणावघातादि फलोपकार्यथापरम् ॥ ३६ ॥
प्रयाजाद्येवं पूर्णांगयुग्विधिः प्रकृतिर्मता ।
दर्वीहोमस्तदुभयविलक्षणविधिर्मतः ॥ ३७ ॥
त्रिधार्थवादोऽत्र विधिशेषभूतं हि वाक्यकम् ।
प्रमांतरविरुद्धार्थबोधको गुणवादकः ॥ ३८ ॥
आदित्यो यूप इत्यादिर्द्वितीयस्त्वनुवादकः ।
प्रमांतराप्तार्थबोधी यथाऽग्निर्हिमभेषजम् ॥ ३९ ॥
मानांतरविरोधाप्तिविहीनो गुणबोधकः ।
भूतार्थवाद इंद्रोऽस्त्रं वृत्राय प्राहिणोदिति ॥ ४० ॥
विधिस्तुतिपरत्वे तु समानेऽपि तृतीयकः ।
देवाधिकरणन्यायात्स्वतःप्रामाण्यरूपकः ॥ ४१ ॥
त्रय्या हौत्रादिभेदेन प्रयोगास्त्रिविधा मताः ।
यज्ञाद्यनुपयुक्तोऽप्यथर्वा शान्त्यादिबोधकः ॥ ४२ ॥
शाखाभेदेऽपि कर्मैक्यं प्रतिवेदमिति स्थितिः ।
वेदान्तवाक्यजातं विध्यर्थोभयविलक्षणम् ॥ ४३ ॥
अज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादनात् ।
न विधिस्तत्स्वयं स्वार्थे ज्ञानानंदपरात्मनि ॥ ४४ ॥
उपक्रमादिषड्लिंगबलवत्त्वेन च स्वतः ।
प्रमाणभूतमप्यन्यान्सर्वानपि विधीन् स्वयम् ॥ ४५ ॥

आपादयत्येव बुद्धिशुद्धिद्वारा स्वशेषताम् ।
तस्यान्यशेषत्वाभावान्नार्थवादत्वमीरितम् ॥ ४६ ॥
अबाधिताविज्ञातार्थज्ञापकं ह्येतदेव हि ।
बलिष्ठत्वात्सदितरैः प्रमाणैर्न विहन्यते ॥ ४७ ॥
अत्राधिकारिभेदेन क्रममुक्त्या उपासनम् ।
प्रोक्तं त्रिधांगावबद्धप्रतीकाहंग्रहाभिधम् ॥ ४८ ॥
सद्योमुक्त्यै तुरीयं तु जिज्ञासाख्यं समीरितम् ।
निर्गुणोपासनं तत्तु वक्ष्ये शिक्षान्तरेऽग्रतः ॥ ४९ ॥
उद्गीथादिपदार्थेषु कर्मांगेषु जडेषु च ।
ब्रह्मादिदृष्टिरंगावबद्धोपासनमुच्यते ॥ ५० ॥
जडेषु कर्मानंगेषूक्ता नाममनआदिषु ।
या ब्रह्मदृष्टिर्विज्ञेयं प्रतीकोपासनं तु तत् ॥ ५१ ॥
अहंग्रहाख्यं दहरवैश्वानरमुखं स्मृतम् ।
वैश्वानरोऽहं दहराकाशोऽहमिति तत्र च ॥ ५२ ॥
उदितं जीवसगुणब्रह्मध्यानमभेदतः ।
महाप्रयासतः साध्यं सगुणब्रह्मलब्धये ॥ ५३ ॥
अग्निहोत्रादि यत्कर्म चोदितं कर्मकाण्डतः ।
कर्तव्यात्राप्यर्पणादावुद्गीथादौ च कर्माणि ॥ ५४ ॥
ब्रह्मदृक्प्रोक्तमंगावबद्धोपासनमेव तत् ।
ग्राह्यं गुणोपसंहारन्यायाच्छाखान्तरादपि ॥ ५५ ॥
प्रतिबंधकपापं तन्निवार्याप्रतिबन्धतः ।
उत्क्रान्त्यनन्तरं स्वर्गप्रदमाशु तदर्थिनाम् ॥ ५६ ॥
प्रदानवदपापानां प्रददात्यधिकं फलम् ।
नैतदादरणीयं तदध्रुवत्वान्मुमुक्षुणा ॥ ५७ ॥

तत्तु प्रमाणबलतो धीशुद्धिद्वारतोऽचिरात्।
इहैव मोक्षसिद्ध्यर्थं कर्तव्यं परमादरात् ॥ ५८ ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्० ।
इति वाक्यबलाद्ब्रह्माप्तिस्तद्दृष्टस्येह नापरा ॥ ५९ ॥
प्रतीकोपासनेनापि निष्कामस्येह शुद्धितः ।
मुक्तिर्वा महदाद्याप्तिरप्रतीकेति सूत्रतः ॥ ६० ॥
गुणभेदश्रुतेः शाखाभेदेनैक्यं विधीयते ।
सजातीयोपासनस्य नानाशाखागतस्य तु ॥ ६१ ॥
एकत्वाद्ब्रह्मलोकाप्तिफलस्यातो विशेषतः ।
ग्राह्या गुणोपसंहाराद्वुर्वनुग्रहतो गुणाः ॥ ६२ ॥
श्रद्धयैवं मानसाग्निचयनादेरिहाऽऽमृतेः ।
उक्तवद्ध्यायतो नित्यं ब्रह्मलोकगतिः क्रमात् ॥ ६३ ॥
भूमवैश्वानरादीनां मध्यादेकतमाऽऽमृति ।
ग्राह्योपास्तिस्तु काम्यानां यथाकामं समुच्चयः ॥ ६४ ॥
देहं कालवशात्त्यक्त्वा ध्येयाकार उपासकः ।
मुक्त्वा पुण्येतरेऽतीत्य विरजानामिकां नदीम् ॥ ६५ ॥
यात्यमानवनीतोऽसौ पुनरावृत्तिवर्जितः ।
अहंग्रहोपासकस्तु ब्रह्मलोकं स्वलङ्कृतः ॥ ६६ ॥
यत्रापराजितपुरं हिरण्मयगृहाणि च ।
अश्वत्थः सोमसवनः सर ऐरंमदीयकम् ॥ ६७ ॥
अनन्याधिपतिस्तत्र सङ्कल्पादेव कामितान् ।
विषयान् स्थूलदेहेन कदाचित्सूक्ष्मदेहतः ॥ ६८ ॥
एकधानेकधा वापि भूत्वाऽप्रतिहतौजसा ।
हिरण्यगर्भवद्भोगान् भुञ्जानः सोऽवतिष्ठते ॥ ६९ ॥

सर्वानन्दास्पदब्रह्मलोकानन्दभुगेव सः ।
महाकल्पे ब्रह्मलोके प्रणष्टे ब्रह्मणा सह ॥ ७० ॥
पुनरावृत्तिरहितो ब्रह्मभूयाय कल्पते ।
अविभागेन स ब्रह्मभावं यास्यत्युपासनात् ॥ ७१ ॥
एवं ह्यहंग्रहोपास्तिफलं परमदुर्लभम् ।
महानुग्रहतो यत्नात्साधनीयं मनीषिणा ॥ ७२ ॥
यथास्योपासकस्येयं गती रश्म्यनुसारिणः ।
सुषुम्णया सदान्येषां सा तु स्वप्नेऽपि दुर्लभा ॥ ७३ ॥
आदित्यादिमण्डलातिप्रदमध्वादिविद्यया ।
तत्तल्लोकफलाप्त्यन्ते परत्र गतिरुच्यते ॥ ७४ ॥
एवं श्रौतोपासनानि मीमांसाद्वितयस्य च ।
संमतानि तु वामाख्योपासनानि न सन्ति हि ॥ ७५ ॥
मद्यभंक्षादिवामाद्यागमस्य तु न मानता ।
मीमांसाद्वितये सर्वशिष्टैश्च तदनादरात् ॥ ७६ ॥
मद्यादियुग्राजसार्चाधिकारो ब्राह्मणस्य न ।
सुरामद्याशने देहान्तप्रायश्चित्तकीर्तनात् ॥ ७७ ॥
स्पर्शे तदङ्गच्छेदोक्तेर्दोषानपगमोक्तितः ।
कृच्छ्राद्यनुष्ठानतोऽपि पातित्यं शिष्टसंमतम् ॥ ७८ ॥
रहोऽन्यथाचारिणोऽपि नवीना भास्करादयः ।
ब्राह्मण्याद्दुर्विधेर्भ्रष्टोऽभवं माऽन्ये भवन्त्विति ॥ ७९ ॥
सभायां भूतदयया प्रशंसन्ति स्म शिष्टवत् ।
परिष्कुर्वन्ति स्म पूर्वग्रन्थानुसृतितः स्वयम् ॥ ८० ॥
स धर्मबुद्ध्यान्धपरम्परया तमसागतः ।
धर्माभासस्तिरस्कार्य उभयभ्रंशकृद्यतः ॥ ८१ ॥

मीमांसाद्वय्यनुक्तापि पुराणस्मृतिसंमता ।
शिष्टाहृतेशप्रतिमोपासनोभयसिद्धिदा ।। ८२ ।।

यतो विशेषान्मन्दानां तपःपूजातिशायनात् ।
बिम्बाभिरूप्यात्सान्निध्यममूर्तोऽपीश ऋच्छति ।। ८३ ।।

ततो वशीकृते चित्ते सगुणब्रह्मशीलनात् ।
निरुपाधिकमेवाविर्भवेद्ब्रह्मेडनुग्रहात् ।। ८४ ।।

मन्देनापि विरागेण जन्ममृत्युभयादव ।
मामीशेति प्रपन्नानामर्चकानां स मोक्षदः ।। ८५ ।।

नेशस्य प्रतिमार्च्येवं नवीनाः केपि निर्दयाः ।
प्रजल्पन्ति श्वभाषितसोदरीभूतमेव तत् ।। ८६ ।।

प्राग्देवताधिकरणन्यायावष्टम्भतस्त्विदम् ।
उक्तं पुनरुपन्यासो नेह तस्य प्रतन्यते ।। ८७ ।।

सगुणेशार्चया रामदासाद्या अधुनातनाः ।
अत एवाभवञ्शाब्दपरब्रह्मपरायणाः ।। ८८ ।।

कृष्णापञ्चनदीयोगेऽभ्यर्च्य श्रीदत्तपादुके ।
भक्त्या नारायणस्वामी जीवन्मुक्तोऽधुनाऽभवत् ।। ८९ ।।

पुत्र्यावादाय विधुरः कारनाटकदेशतः ।
नृसिंहवाटिकाक्षेत्रमेत्यार्चनपरोऽभवत् ।। ९० ।।

स्वदासस्य वचो गरिष्ठः शेषस्य सत्यं प्रणिधानतुष्टः ।
: प्रसन्नोऽभवदल्पबुद्धिप्रार्थ्यस्ततोऽस्यास समाधिसिद्धिः ।। ९१

त्तपुत्र्यौ निशि पाययित्वा स्वयं यवागूमथ शाययित्वा ।
ाहितस्ते अथ मेहनाय बुद्धे प्रभुः प्राप तदाऽवनाय ।। ९२ ।।

ायणोऽपि स्वयमेष भूत्वा नारायणोऽन्यस्तनये गृहीत्वा ।
ाप्रदीपोऽपि धृतप्रदीपो नीत्वा बहिस्ते जनधीप्रदीपः ।। ९३ ।।

कृतोत्सृती ते विमले विधाय निधाय वेश्माप्यररं पिधाय ।
नारायणो व्युत्थित एति यावन्नारायणोऽद्वैत इवास तावत् ॥ ९४ ॥
ज्ञात्वाथ तद्ब्रह्ममुभे स्वजाते दत्वा द्विजाभ्यां विधिनैव जाते ।
तस्मिन् विरक्ते प्रददौ च तस्मै स प्रैषदण्डाद्यपरोऽपरस्मै ॥ ९५ ॥
यशस्यमीशेन कृतं रहस्यमेतत्त्वविद्वान् मठपः प्रहस्य ।
मनस्यतीवार्त इवाप्रशस्यं भ्रष्टोऽयमित्याह स तद्रहस्यम् ॥ ९६ ॥
नारायणोक्तिश्रवणात् प्रबोधपारायणं वेद स तं प्रबोधम् ।
नारायणात् प्राप स शिष्यभावपरायणः प्राप परात्मभावम् ॥ ९७ ॥
इतीद्प्रसादादपरोक्षसाक्षात्कारो बभूवापि परोऽपि साक्षात् ।
न्यासं स्वतोऽकारयदप्यपूर्वं यस्याधुनाप्यर्चनमस्ति पूर्वम् ॥ ९८ ॥
शालिवाहनशके भसप्तभूसंमिते स मधुमास्यमातिथौ ।
( १७२७ )
संस्थितोऽभवददृश्यरूपतः स्वार्चकस्य स च दृश्यरूपतः ॥ ९९ ॥

आरब्धे त्वमुना नृसिंहभजने सिंहोऽग्रतः प्राप्तवान्
योऽन्तःस्थोऽपि बहिष्ठनत्यवसरे नारायणेत्युक्तवान् ।
व्याघ्रस्याधिमपाहरद्द्विजवरं यो वैद्यनाथे मृतम्
चक्रे सासुमसौ ददातु भजतां नारायणो नोऽमृतम् ॥ १०० ॥

एवं तूपासनानि श्रुतिमुखगदितान्यत्र सन्दर्शितानि
प्राज्यान्येषां यदिष्टं तदिह परमया श्रद्धया भक्तिमत्या ॥
योऽङ्गीकृत्वाऽप्युपास्तेऽपि सति कलियुगे तारतम्यादुपास्ते
सोऽन्यत्राल्पाथवेयाच्छ्रुतिमुखगदितां मुक्तिमीशप्रसादात् ॥ १०१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वासुदेवानन्द-
सरस्वतीस्वामिविरचिता
॥ युवशिक्षा समाप्ता ॥

---

श्रीगणेशदत्तगुरुभ्यो नमः

श्री. प. प. श्रीवासुदेवानन्दसरस्वतीस्वामिविरचिता

# वृद्धशिक्षा

ग्रन्थकृट्टीकासहिता

# शुद्धिपत्रम्

| पत्रम्. | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २२ | जोऽयव्यो | जोऽव्ययो |
| ,, | २४ | चात्रेरनुसूया | चात्रेरनसूया |
| ३ | १७ | ज्ञानावर | ज्ञानानन्द |
| ४ | २५ | इदंः | इदं |
| ५ | ३ | रोहित | लोहित |
| ५ | २५ | पितृशरीरं स्वशरीर | पितृशरीरं मातृशरीरंस्वशरीर |
| ६ | ६ | भ्योऽगम्यते | भ्योऽवगम्यते |
| ६ | २३ | बडधिकरणैश्च | षडधिकरणैश्च |
| ७ | ६ | हंस परिव्राज | हंसपरिव्राज |
| ७ | ९ | हंपरदेवता | हं परदेवता |
| ,, | २२ | मकराख्य | मकाराख्य |
| ८ | ७ | ब्रह्म चाकार | ब्रह्मा चाकार |
| ,, | २२ | यितुम अशक्य | यितुमशक्य |
| ९ | १७ | त्वोपहितत्वयुतं चै० | त्वोपहितचै० |
| १० | ३ | वदुणवाद | वद्गुणवाद |
| ,, | १८ | आब्रह्म | आब्रह्म |
| १३ | २ | कारिणु उप | कारिणमुप |
| १६ | २२ | मानश्रवणा | पातश्रवणा |
| १७ | १२ | श्रयामन्द | श्रयान्मन्द |
| १८ | २३ | वितेन्द | विन्दते |
| १३ | ९ | प्रत्यक्र | प्रत्यक् |
| १४ | २४ | वृत्तिव्याप्त्या | वृत्तिव्याप्त्या |
| १० | २४ | शांतान्यचेष्ट गुणकाम | शांतान्यचेष्टगुणकाम |
| ११ | ६ | परितुष्ट इतः | परितुष्टिं इतः |
| १९ | १० | अथ पराय येत्यादि | अथ परा ययेत्यादि |

# अनुक्रमणिका




पृष्ठम् विषयाः

१ चत्वारः पुरुषार्थाः । अर्थकामयोर्गौणं पुरुषार्थत्वम् । द्विविधो-धर्मस्तद्ग्राहकाश्च । प्रवृत्तिधर्मोऽपि गौणः । तत्र युक्तिप्रदर्शनम् । उपासकानां निवृत्तिलक्षणो धर्म एव श्रेयस्करः, तत्र प्रमाणानि । श्रीदत्तप्रभोरवतारकारणं, तदीयावतारसमयस्तत्स्थितिकालश्च ।

२ रामकृष्णावतारापेक्षया श्रीदत्तावतारस्याधिककालस्थायित्वम् । एतदवतारस्य सर्वोपास्यत्वे उपनिषत्प्रमाणम् । तत्प्रेरितो ग्रंथकर्ता मंदमध्यमाधिकारिकृते एतद्ग्रंथं रचयामास । ओंकारस्य मंग-लार्थत्वे प्रमाणम् । श्रीदत्ताख्यब्रह्मणो जगत्कारणत्वं कथम् ? प्रधानमेव जगत्कारणमिति सांख्यमतम् । तस्य निरसनम् ।

३ अचेतनप्रधानस्य जगत्कारणत्वं नास्ति । विश्वकृत् इति पदस्य विश्वसंहर्ता इत्यप्यर्थः । जडप्रधानस्य कर्तृत्वाभ्युपगमे दोषः । श्रीदत्ताख्यब्रह्मणस्तु जगत्कारणत्वे न किमपि बाधकं, नैय्या-यिकमतेन ब्रह्मणो जगत्कारणत्वाक्षेपः । परमाणुप्रतिबंद्या स्वमत-दोषनिरासपूर्वकं परमतनिरासः । बौद्धमतेन जीवेश्वरस्वरूपम् ।

४ बौद्धमतखण्डनम् । विश्वसृष्टौ वेदान्तप्रक्रिया । मायासिद्धिः । तदंगीकारेपि नाद्वैतहानिः । मायया जीवेश्वरविभागस्तत्स्वरूपं च ।

५ आत्मनः अविकृतस्यैव विवर्तन्यायेन जगदुपादानत्वम् । प्रथमं सूक्ष्मभूतानि, ततो ज्ञानकर्मेंद्रियाणि, तद्देवताश्च, तैः समस्तै-र्लिंगदेहः । पंचीकरणप्रक्रिया । स्थूलभूतोत्पत्तिः । ततश्च भोगा-यतन भोग्य-निवासस्थाननिर्मितिः । देहेषु जीवात्मना, भूम्यादिषु च अंतर्यामितया स्थितिः । हिरण्यगर्भद्वारा परमात्मैव सर्वभूत-निर्माता । संसारस्य द्वैविध्यं । अवस्थात्रयं जीवेन अनुभूयते । जाग्रन्निद्रे अपि स्वप्नः । द्विविधोपि संसारो जीवानुभवविषयः ।

पृष्ठम् विषयाः

६ सृष्टिप्रतिपादकश्रुतीनां परस्परं विरोधमाशंक्य तत्परिहारः। प्रधानस्य जगत्कारणत्वं न संभवति। मायासहितः श्रीदत्ताख्य-परमात्मैव विश्वकृत्। जीवात्मनः अनुत्पत्तिः, ज्ञानरूपत्वमित्यादि।

७ श्रीदत्तशब्दस्य चत्वारोऽर्थाः। ओंकारस्य पदत्वं वाक्यत्वं च। ओंकारस्य पदत्रयात्मकत्वरूपव्यस्तत्वं। तदभिधेयस्य श्रीदत्तपर-मात्मनोपि अध्यात्मादिरूपेण व्यस्तत्वं।

८ व्यष्टिसमष्टिविवेचनम्। ओंकारस्य चतुष्पात्वं। ओंकारस्य चतुर्णां पादानां वाच्यार्थलक्ष्यार्थवर्णनम्। नादस्यैकत्वेपि बहु-वचनस्योपपत्तिः।

९ नादशब्दार्थः। अजशब्दार्थः। अयं तुरीयः। चतुर्णां स्वरूप-वर्णनम्। अकारोकारमकारार्धमात्रारूपपदार्थाभिधानपूर्वकाखंडै-करसवाक्यार्थकथनम्। जहदजहल्लक्षणया वाक्यार्थबोधविचारः।

१० सर्वेषां महावाक्यानामद्वितीयप्रत्यगभिन्नब्रह्मपरत्वमेव। तेषां जीवस्य ब्रह्मत्वेनोपासनपरत्वं न संभवति, न च गुणवादपरत्वम् नापि विपरीतबोधकत्वम्। किं तु प्रमितिजनकत्वमेव। प्रणवार्था-नुसंधानं जपश्च समाधिसाधनम्। तत्र प्रमाणम्। परापरब्रह्मप्रदः ओंकारः ब्रह्मणः प्रतीकम्। ओंकारस्य व्युत्पत्तिः। गौणमुख्य-मुक्तिविवेचनम्। ब्रह्मलोकस्य द्वैविध्यम्। अहंग्रहोपासकानां गतिः। अंगावबद्धोपासकानां प्रतीकोपासकानां च गतिः।

११ वेदान्तस्वरूपम्। तद्विचारस्य स्वरूपं, तदधिकारिणश्च। शारीरक-मीमांसाशास्त्रस्य अध्यायसूत्रसंख्या, तत्स्वरूपं च। प्रथमाध्यायस्य, तत्पादचतुष्टयस्य चार्थः। द्वितीयाध्यायस्य, तत्पादचतुष्टयस्य चार्थः। तृतीयाध्यायस्य तत्पादत्रयस्य चार्थः।

१२ तृतीयाध्यायचतुर्थपादार्थः। चतुर्थाध्यायस्य तत्पादचतुष्टयस्य चार्थः। वेदान्तवाक्यजातस्य प्राबल्यं प्रामाण्यं च। तत उदिताया विद्यायाः नैव नाशः। वेदान्तानां विधि-

पृष्ठम् विषयाः

त्वमर्थवादत्वं च न संभवति। सर्वेऽपि विषयः वेदान्तशेषभूताः। क्वचिद्वेदान्तानां विधित्वं चोक्तम्। वेदान्तशास्त्रमेव सकलशास्त्रमूर्धन्यम्। अत्र प्रथमपद्ये वेदान्तशास्त्रतात्पर्यं सूचितम्।

१३ 'अथातो ब्रह्मजिज्ञासा' एतदधिकरणसूचनप्रकारः। जन्माद्यधिकरणसूचनप्रकारः। शास्त्रयोनित्वाधिकरणवर्णकद्वयसूचनप्रकारः। समन्वयाधिकरणवर्णकद्वयसूचनप्रकारः। प्रथमाध्यायप्रथमपादज्ञापनम्। प्रथमाध्यायद्वितीय तृतीयपादज्ञापनम्।

१४ प्रथमाध्यायचतुर्थपादज्ञापनम्। अस्य ग्रंथस्यानुबंधचतुष्टयसूचनं प्रथमपद्ये। प्रकरणग्रंथलक्षणम्। उपनिषच्छान्तिसूचनम् सर्वसंन्यासशब्दार्थविवेचनम्।

१५ ( श्लोकः २ ) ब्राह्मणस्यैव संन्यासाश्रमेऽधिकारः। भक्तियोगः इतरसाधननिरपेक्षः। कलौ कीर्तनविधिः। यतेः प्रणवार्थानुसंधानफलम्। इतरेषां तत्स्थाने सोहमिति कीर्तनम्। कलौ संन्यासनिषेधपरवाक्यार्थविचारः।

१६ ( श्लोकः ३ ) यतेः षट् कर्तव्यानि। षट् अकर्तव्यानि। जपरूपाणि षट् कर्तव्यानि। संन्यासे वैराग्यस्यावश्यकत्वम्। वैराग्यं विना आश्रमाचारभ्रष्टत्वे पातः। भगवंतमाश्रितस्य न कापि बाधा वैराग्यहीनस्य।

१७ मुक्तौ भक्तेरावश्यकता। भक्तियोगे सर्वेषामधिकारः। ज्ञानयोगे साधनसंपत्तेरावश्यकत्वम्। आश्रमधर्माचरणं किमर्थम्?।

१८ ब्रह्मभावपर्यंतं शिष्याचार्यत्वदृष्टिरावश्यिका। मुक्तौ न कोऽपि विभागः। ( श्लोकाः ४।५।६) ऋणत्रयापाकरणविचारः। ईश्वर भजनसौलभ्यं तत्फलं च। सर्वात्मनः भजनं सर्वतृप्तिकरम्। भक्तो न कस्यापि ऋणी। भक्तस्य मोक्षमार्गे निर्भयत्वम्।

१९ उत्स्वभावशब्दार्थविचारः। भक्तस्य मृत्युभीतिरपि नास्ति। वस्तुशक्त्या ईश्वरः भक्तपापं हरति। अंधपरंपरया संन्यासादर इति जैमिनीयमतसूचनम्।

पृष्ठम् विषयाः

२० जैमिनीयमतोपक्रमः। आत्मनः नानात्वं, कर्तृभोक्तृरूपत्वं च। भोग्यानां प्रवाहनित्यत्वम्। वैराग्यस्यासंभवः। धर्म एव फलदाता। आत्मा ज्ञानपरिणामवान्। तथापि तस्यानित्यत्वं न। तत्त्वज्ञानं क्षयरोग एवेति जैमिनीयमतोपसंहारः। जीवात्मनः नानात्वं, कर्तृत्वं, भोक्तृत्वं च औपाधिकम्। लोककालागमात्मनां स्वरूपं, तेषामनित्यत्वं च।

२१ महाप्रलये अव्यक्ते लीलानां जीवानां कल्पांतरे पुनरुद्भवः। जीवविनाशः औपाधिकः। प्रवृत्तिं त्यक्त्वा संन्यास आदर्तव्यः। विशारदशब्दार्थः शिष्यपरः। तथैव गुरुपरः।

२२ गुरोराश्रयणस्वरूपम्। (श्लोकः ७) गुरूपसत्त्यनंतरं कर्तव्यः प्रकारः। उपासीनपदार्थस्तत्प्रयोजनं प्रकारश्च। तत्परशब्दार्थः। ज्ञानलाभसाधनानि। शमस्थैर्यसाधनानि। 'अनन्यप्रोक्ते गतिरत्र नास्ति' इति काठकश्रुतिभाष्यम्।

२३ ब्रह्मसाक्षात्कारस्यांतरंगसाधनानि। श्रवणादीनामनुष्ठानमर्यादा। कहोलश्रुत्यर्थः। (श्लोकः ८) शाब्दज्ञानं पापहरं न वेति विचारः। 'ज्ञानाग्निः सर्वकर्माणि०' इति स्मृत्यर्थविचारः।

२४ शाब्दज्ञानस्यैव बुद्धिपूर्वकृतपापदाहकत्वम्। अपरोक्षात्मज्ञानं अज्ञानदाहकम्। श्रवणमपि कृच्छ्रफलदम्। शाब्दज्ञानं संशयनिवर्तकम्। अविद्यायाः आवरणं द्विविधम्। मननादिषु प्रवृत्तिविचारः। (श्लोकः ९) श्रवणाद्यनुष्ठानेन अपरोक्षसाक्षात्कारद्वारा शोकादिनाशः।

२५ परावरशब्दार्थः। अष्टौ पाशाः। कामलयशब्दार्थः। ग्रंथिभेदपदार्थविचारः। कामशब्दार्थः। (श्लोकः १०) आत्मैकत्वदर्शनं कथमुपपन्नमित्याशंका।

२६ भोक्त्रापत्त्यधिकरणविचारः। आरम्भणाधिकरणविचारः। देहत्रयविचारारम्भः। सूक्ष्मशरीरघटकपदार्थविवेचनम्।

| पृष्ठम् | विषयाः |
|---|---|
| २७ | स्थूलशरीरविचारः। कारणशरीरविचारः। समष्टिशरीरत्रयविचारः। आत्मशब्दस्य चत्वारोऽर्थाः। |
| २८ | साक्षीतिपदार्थविचारः। (श्लोकः ११) आत्मा धिया कथमीक्ष्यते? इत्याशंका। श्रवणपदार्थः। श्रवणादिसंस्कृता बुद्धिरात्मदर्शने करणम्। (श्लोकः १२) आत्मा नैव दृश्यः, अतः धिया द्रष्टुं न शक्यः। |
| २९ | आत्मनि वृत्तिव्याप्तिरेव। फलव्याप्तिवृत्तिव्याप्तिपदार्थविचारः। तत्र दृष्टान्तप्रमाणप्रदर्शनम्। स्वात्मदृक्पदस्यार्थद्वयम्। (श्लोकः १३) |
| ३० | षड्विधलिंगैस्तात्पर्यावधारणं दुर्घटम्। तार्किकमतखण्डनम्। सांख्यमतखण्डनम्। विवर्तवादशब्दार्थः। जगज्जन्मप्रतिपादिकाः श्रुतयः। |
| ३१ | लयप्रतिपादिकाः श्रुतयः। शुक्तिरजतवत् जगत् दृष्टिसृष्टम्। दृष्टान्तोपपत्तिः। असज्जगता सदात्मनः एकत्वप्रतिपादनं कथम्? प्राणादीनां मिथ्यात्वानुमानप्रयोगः। एकत्वबोधायैवाभेदोक्तिः। ममाय प्राणः इत्यादिव्यवहारहेतुराध्यासिकसम्बन्धः। |
| ३२ | अध्यासनिवृत्तिहेतुः। (श्लोकः १४) वाक्यविचारः कथं पुरुषार्थहेतुरित्याशंका। ईश्वरभक्तानां सकृच्छ्रवणादपि ज्ञानोत्पत्तिः। गुरुणा शिष्यानुशासनप्रकारः। व्यतिहारेणात्मानात्मविवेकः। |
| ३३ | अंगादीनामनात्मत्वसाधकानुमानप्रयोगः। दुःखादीनामात्मसम्बन्धाभावः। आत्मनो वास्तवस्वरूपानुशासनम्। प्रत्यक्पदस्यार्थः। (श्लोकः १५) |
| ३४ | गुरुणा सकृद्बोधितः शिष्य आत्मानं वेत्ति चेत् उपनिषत्सु तत्र तत्र नैकवारमुपदेशः कथमित्याक्षिप्य समाधानम्। आत्मसाक्षात्कारे प्रतिबन्धः, तत्र दृष्टान्तश्च। तन्निवृत्त्यै श्रवणाद्यनुष्ठानम्। शश्वच्छ्रवणस्यापि कथमुपयोग इति शंकासमाधानम्। श्वेतकेतोः भृगोश्चापि नैकवारं प्रश्नोपपत्तिः। |

पृष्ठम्　　　　विषयाः

३५　(श्लोकः १६) प्रजापतिलोकान्तं सर्वे आनन्दा अनित्याः। स्वरूपानन्दस्याविर्भावः कीदृशः? तत्र दृष्टान्तः। महावाक्यस्य मोक्षपर्यवसायित्वम्। अन्यथा बाधकोक्तिः।

३६　'शास्त्रयोनित्वात्' इत्यधिकरणविवेचनम्। (श्लोकः १७) पदार्थशोधनारम्भः। वियः सर्वांगव्यापित्वम्। जाग्रदवस्था-वर्णनम्। आत्मनोऽसंगत्वम्। जाग्रदवस्थाया व्यभिचारित्वम्।

३७　स्वप्नावस्थास्वरूपम्। मनसि इन्द्रियलयाभावः। स्वप्नावस्थाया मेवात्मनः स्वयंज्योतिष्ट्वम्। स्वाप्नपदार्थानां मायामात्रत्वम्। सुषुप्त्यवस्थास्वरूपम्।

३८　आत्मनस्तुर्यत्वम्। (श्लोकः १८) तुरीयस्यासत्त्वं नास्ति। तुरीयशब्दार्थविवेचनम्। विश्वस्य मर्त्यत्वसाधनं सदृष्टान्तम्।

३९　जगद्धारकं रूपत्रयम्। तद्विभजने जगतो नाशः। आत्मनस्तु न विनाशः। जगतोऽसत्त्वे, आत्मनश्च सत्त्वेऽनुमानप्रयोगौ। आत्मा सर्वप्रकृतिः। (श्लोकः १९)

४०　आत्मनो भासकत्वं, स्वप्रकाशत्वं, मतिवेत्तृत्वं च। सर्वसंचालकत्वेऽप्यविकारित्वमात्मनः। (श्लोकः २०) आत्मनः शेषित्वादतिप्रियत्वम्। साक्षित्वं, सच्चिदानन्दरूपत्वं च। त्वंपदार्थ-विवरणोपसंहारः। (श्लोकः २१) तत्पदार्थविवेचनारम्भः। आत्मनः प्रकृतिभिन्नत्वम्। शून्यवादनिरासः।

४१　परमात्मनः आकाशादिपदार्थसंबंधराहितत्वम्। अनवयवत्वं,एकत्वं विशुद्धरूपत्वं च। (श्लोकः २२) निषेधमुखेन, विधिमुखेन च गम्यत्वं, तर्कागम्यत्वमित्यादिविवेचनम्। (श्लोकः २३)

४२　ईश्वरः सर्वज्ञः, सर्वशक्तिः, अन्तर्यामी, अनन्तः, समः इत्यादि-स्वरूपः। तत्पदार्थोपसंहारः। (श्लोकः २४) वाक्यार्थविचारा-रंभः। संसर्गो वा विशिष्टो वा वाक्यार्थो न संभवति इत्यत्र हेतुप्रदर्शनम्। (श्लोकः २५)

पृष्ठम् विषयाः

४३ अखण्डं तादात्म्यं वाक्यार्थः। तादात्म्यज्ञप्तिदार्ढ्यस्य फलम्। (श्लोकः २६) तत्पदस्य वाच्यार्थौ लक्ष्यार्थश्च। (श्लोकः २७)

४४ त्वम्पदस्य वाच्यार्थौ लक्ष्यार्थश्च। (श्लोकः २८) वाच्यार्थयार्विरोधः। लक्षणया तत्परिहारः।

४५ लक्षणाव्याख्यानम्। वृत्तिव्याप्तिविचारः। (श्लोकः २९) ज्ञानिनः कृतकृत्यकृत्वम्। दृष्टयदृष्टी इतिशब्दस्यार्थः।

४६ (श्लोकः ३०) साक्षात्कारप्रतिबंधकयुक्तेन श्रवणाद्यावृत्तिः कार्या। तत्प्रयोजनं वाक्यार्थबोधदार्ढ्यम्। (श्लोकः ३१) आत्मा जगतो नारम्भकः नापि जगदाकारपरिणामी।

४७ परमाणूनां, प्रधानस्य च जगत्कारणत्वखण्डनम्। (श्लोकः ३२) विवर्तन्यायेन आत्मनः एव जगत्कारणत्वम्। (श्लोकः ३३)

४८ उपक्रमोपसंहाररूपं आद्यं श्रवणलिंगम्। (श्लोकः ३४) अभ्यासः अपूर्वता, फलं, अर्थवादश्चेति चत्वारि लिंगानि। (श्लोकः ३५)

४९ तत्त्वंपदार्थपरिशोधनं षष्ठं लिंगम्। श्रवणस्वरूपम्। (श्लोकः ३६) मननस्वरूपम्। मननस्य फलम्। (श्लोकः ३७) निदिध्यासनस्वरूपम्।

५० (श्लोकः ३८) समाहितस्य स्वरूपम्। सः निरन्तरमात्मनिष्ठः। (श्लोकः ३९) आत्मबोधनिष्ठा योगिनश्चरमा काष्ठा। अस्मात्समाधेर्योगिनं प्रच्यावयितुं न कोऽपि समर्थः। इयमेव मान्या, धन्या गतिः। (श्लोकः ४०)

५१ समाधौ अप्रमत्तः पूर्णानन्दभाग्भवति। समाहितत्वं कथं ज्ञायते?। (श्लोकः ४१) अन्त्यमतिवृत्तिः सकार्याज्ञाननाशिका। स्वरूपज्ञानस्याविरोधित्वाद् वृत्तिज्ञानस्य कथं विरोधित्वमित्याशंकापनयनं सदृष्टान्तम्।

५२ (श्लोकः ४२) एषः आत्मज्ञानसमकालं मुक्तः। अस्य प्रारब्धमज्ञजनबोधार्थमुक्तम्। (श्लोकः ४३) ज्ञानिनः समाध्यपेक्षया

पृष्ठम् विषयाः

योगिनः समाधिरपकृष्टः। समाधावसमर्थो दत्तात्रेयाश्रयान्मुक्तिं गच्छति।

५३ (श्लोकः ४४) श्रवणादिकं कर्तुमसमर्थः ईशं भजेत्। ईशस्वरूपम्। (श्लोकः ४५) ईश्वरस्य परमदयालुत्वं, भक्ताघहरत्वं, तद्भजनस्य मृत्युनिवारकत्वं च। (श्लोकः ४६)

५४ भगवद्दत्तात्रेयकृतो यदोरुद्धारः। (श्लोकः ४७) भगवतः उपनिषत्प्रतिपाद्यत्वकथनारम्भः। नासदासीदिति सूक्तप्रतिपाद्यत्वोपपादनम्। (श्लोकः ४८) पूर्वश्लोकस्थविषयस्य विवरणम्।

५५ दत्तात्रेयः स्वप्रकृतिविलीनं जगत्स्रष्टुं हिरण्यगर्भं सृजति। (श्लोकः ४९) ऐतरेयप्रतिपाद्य दत्तात्रेयं निर्दिशति।

५६ (श्लोकः ५०) भगवतः ईशावास्यप्रतिपाद्यत्ववर्णनम्।

५७ (श्लोकः ५१) केनोपनिषत्प्रतिपाद्यत्वकथनम्। (श्लोकः ५२) कठोपनिषत्प्रतिपाद्यत्ववर्णनम्।

५८ (श्लोकः ५३) प्रश्नोपनिषत्प्रतिपाद्यत्ववर्णनम्।

५९ (श्लोकः ५४) मुण्डकोपनिषत्प्रतिपाद्यत्ववर्णनम्। (श्लोकः ५५) माण्डूक्योपनिषत्प्रतिपाद्यत्ववर्णनम्।

६० (श्लोकः ५६) तैत्तिरीयोपनिषत्सिद्धः श्रीदत्तात्रेयः।

६१ (श्लोकः ५७) छान्दोग्योपनिषत्तात्पर्यविषयः श्रीदत्तात्रेयः।

६२ (श्लोकः ५८) बृहदारण्यकोपनिषत् श्रीदत्तात्रेयपरा।

६३ (श्लोकः ५९) एवं स्मृतिपुराणादिप्रतिपाद्यत्वमपि भगवतः।

६४ (श्लोकः ६०) भगवत्कृतः प्रल्हादोपदेशः। (श्लोकः ६१) अलर्कोद्धारः। (श्लोकः ६२) विष्णुदत्तानुग्रहः।

६५ (श्लोकः ६३) आयुर्नामकस्य राज्ञो भगवत्प्रसादलाभः। (श्लोकः ६४) पिंगलनागश्रीदत्तात्रेयसंवादः।

६६ (श्लोकः ६५) कार्तवीर्यार्जुनकृपावर्णनम्। (श्लोकः ६६) साध्यदेवानामुपरि भगवत्कृपाप्रकारः।

| पृष्ठम् | विषयाः |
|---|---|
| ६७ | (श्लोकः ६७) दलादनमुनेरुपरि श्रीदत्तकृपा. (श्लोकः ६८) श्रीरेणुकामातृप्रेम्णा श्रीदत्तकृतं जमदग्निमहर्षेरौर्ध्वदेहिककर्माचार्यत्वम्। |
| ६८ | (श्लोकः ६९) श्रीदत्तप्रभोः दिनचर्या। |
| ६९,७०, ७१,७२, ७३ | (श्लोकः ७०) सर्वात्मा प्रभुरेव जगद्रूपः। 'तदात्मानं स्वयमकुरुत' 'नायं कुतश्चिन्न बभूव कश्चित्' इति श्रुत्योर्विरोधपरिहारः। सर्वात्मत्वेऽपि संभोगप्राप्त्यादिदोषाभावः। आत्मनः कथं निर्गुणत्वमिति तार्किकमतेनाशंका। निर्गुणत्वबोधकश्रुतिविवरणम्। आत्मनो नित्यत्वम्। आत्मनो नित्यत्वे, बुद्ध्यादीनामनित्यत्वे च अनुमानप्रयोगौ। नित्याकाशवदात्मनोऽपि बुद्ध्याद्यनित्यगुणैर्गुणित्वमित्याशंका। आकाशानित्यत्वसाधनम्। आत्मनोऽनित्यगुणैर्गुणित्वे दृष्टान्ताभावः। आत्ममनसोः संयोगो न संभवति। आत्मनो निर्गुणत्वं विभुत्वं च न संभवतीत्यत्र हेतुप्रदर्शनम्। तत्खण्डनं सदृष्टान्तम्। आत्मनः एकत्वे, उपाधिना संसारित्वे च श्रुतियुक्तिप्रदर्शनम्। आत्मनः एकत्वं वक्तुं न शक्यते इत्याशंका। तत्संभवतीत्यत्र दृष्टान्तविवेचनम्। कुंडलादिविकारेषु कांचनवत् भूतभौतिकविकारेषु कूटस्थः परमात्मा एक एव। बाधासामानाधिकरण्यद्योतिकाः सृष्टिप्रतिपादकश्रुतयः। मध्येऽपि तदात्मकत्वप्रतिपादिकाः श्रुतयः। अंते च अखण्डैकरसमात्रत्वं प्रतिपादयन्त्यः श्रुतयः। जगतः परमात्मस्वरूपत्वात्परमात्मैव एकः। वाक्यभेदप्रसक्त्या सृष्ट्यादिप्रतिपादकवाक्यजातं तत्परमेवेत्याशंकापरिहारौ। तत्त्वमसीत्याद्येकत्वप्रतिपादकवाक्यशेषभूतं सृष्ट्यादिवाक्यजातं सफलम्। |


---

॥श्रीः॥

# वृद्धशिक्षा-सटीका



ॐ श्रीगणेशदत्तगुरुभ्यो नमः।

ॐकारः श्रुतिसारो मामवतूपासितश्च वक्तारम्।

शान्तिः शान्तिः शान्तिश्चास्त्विति संप्रार्थये तमनुवारम् ॥ १ ॥

इह खलु धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्थाः। तत्रार्थकामयोरत्रैवोपक्षीणत्वात् पुरुषार्थत्वं गौणम्। धर्मस्तु वैदिको द्विविधः, प्राणिनामभ्युदयनिःश्रेयसहेतुः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च। जगत्स्थितिं चिकीर्षुर्भगवान् मरीच्यादीन् सृष्ट्वा कर्मकाण्डात्मकं वेदप्रतिपादितं प्रवृत्तिलक्षणं धर्मं ग्राहयामास। स च प्रवृत्तिलक्षणो धर्मो यथावदनुष्ठितोऽपूर्वमुत्पाद्य फलाधिकरणन्यायानुसारेण (३।२।३८) परिच्छिन्नस्वर्गादिफलदो भवति। सोऽपि पुरुषार्थो गौणः 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छा. ८।१।६) इति न्यायानुगृहीतबलवत्तरश्रुत्या पुनःपातश्रवणात् 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादि श्रुतीनां प्राशस्त्यबोधकत्वाच्च प्रकृत्यन्तलीनानामपि पुनःपात एव(२।१।८)'भवप्रत्ययो विदेहप्रकृतिलयानाम्'इति पातञ्जलात्। तस्माद्भिन्नप्रकरणस्थो पनिषद्रूपवेदप्रतिपादितनिवृत्तिलक्षणो धर्मः एवोपासकानां परमपुरुषार्थमोक्षरूपो भवति। अनावृत्तिः शब्दात् इति न्यायात् (४।४।२२)ज्ञानवैराग्यरूपं तं च धर्मं निवृत्तिलक्षणं प्रभुरग्रे सनकादीन् सृष्ट्वा ग्राहयामास। ततः शिष्यपरंपरयाऽविच्छिन्नत्वेन तत्स्थितिं परिपिपालयिषुः स भगवान् ज्ञानैश्वर्यशक्तिबलसंपन्नस्त्रिगुणात्मिकां स्वां प्रकृतिमधिष्ठायाजोऽयव्ययो भूतेश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि स्वप्रयोजनाभावेऽपि लोकानुजिघृक्षार्थं मायया देहवानिव जात इव चात्रेरनुसूयायामवातरत्। स च श्रीदत्ताख्यो भगवान् स्वायंभुवान्तरे प्रथमे सत्ययुगेऽवतीर्य प्रपन्ना-

र्तिशान्त्यर्थमाप्रतिसंचरं वरीवर्ति। रामकृष्णादयस्तु रावणकंसादिनिर्दलनेन भूभारापनुत्तिकार्यान्ते स्वेच्छामयतनूर्जहुः। यदुक्तं भागवते "ययाहरद्भुवो भारं तां तनुं विजहावजः। कण्टकं कण्टकेनेव द्वयं चापीशितुः समम्' इति(१।१५।३०)। न तथायं भगवान् किंतु प्रपन्नार्तिहरणैककार्यार्थमवतीर्णत्वादाकल्पं सदा स्वकार्याय जागर्ति। अयं स्मर्तृगामी सर्वावतारमूर्धन्यः सर्वोपास्य इति दत्तात्रेयतापिन्याख्योपनिषदि ब्रह्मनारायणसंवादः श्रूयते। सत्यक्षेत्रे ब्रह्मा नारायणं महासाम्राज्यं किं तारकं तन्मे ब्रूहीत्युवाच भगवानित्युक्तः सत्यानन्दचिदात्मकं मामकं सात्त्विकं धामोपास्वेत्याह दत्तोऽहमस्मीत्यादिना। तेनैव नोदितोऽयं वेदोक्तकर्मोपासनबोधिके कुमारशिक्षायुवशिक्षे विधाय मन्दमध्यप्रतिपत्तॄणां सुखबोधार्थं वेदान्तानुसारिवृद्धशिक्षाख्यं प्रकरणं चिकीर्षुश्चिकीर्षितस्याविघ्नपरिसमाप्तिप्रचयगमनार्थं शिष्टाचारप्राप्तमाशीर्लक्षणमङ्गलमनुष्टुभा निबध्नाति।

यमोमिति पदं व्यस्तं समस्तं च त्रिभिस्त्रिभिः।
नादैश्चाजं जगौ सोऽव्याच्छ्रीदत्तो विश्वकृत्कविः ॥१॥

अत्रोंकारोऽन्यार्थं नीयमानपूर्णघटः प्रस्थितस्य शकुनायेव मङ्गलार्थोऽपि गम्यते। ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणःपुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभावितिस्मरणात्। स विश्वकृत्। उपलक्षणाद्विश्वोत्पत्तिस्थितिभङ्गकर्ता कविः क्रान्तदर्शी सर्वज्ञ इत्यर्थः। उपलक्षणात् सच्चिदानन्दरूपः त्रयाणामखण्डैकरसत्वात्। ईदृशः श्रीदत्तः परब्रह्मरूपः अविद्याकामकर्मभ्यःसंसारबीजेभ्योऽव्यात्। श्रोतारं वक्तारं चेति शेषः।

ननु दत्ताख्यब्रह्मणो जगत्कारणत्वं न संभवति। तस्य कूटस्थत्वेन क्रियाशक्तित्वायोगादिति सांख्या जगत्कारणं स्वतन्त्रं त्रिगुणं प्रधानं अभ्युपगच्छन्तीति चेन्न।'स ईक्षत लोकान्नु सृजा' इति 'तदैक्षत बहु स्यां प्रजायेय' इति श्रुतेः। ईक्षतेर्नाशब्दमिति। (१।१।५) अधिकरणन्यायाच्च

मुख्येक्षणपूर्वकसृष्टिश्रवणाज्जडप्रधानस्येच्छेक्षयोः अनुपपत्तेः, कविशब्दोपलक्षितः सर्वज्ञः श्रीदत्तो विश्वकृत् 'स हि सर्वस्य कर्ता०''कविर्मनीषी'इत्यादिश्रुतेः।'कविं पुराणमनुशासितारम्'इति स्मृतेश्च।(८)'रचनानुपपत्तेश्च नानुमानम्' (२।२।१) इत्यधिकरणन्यायात्सृष्ट्यनुकूलरचनाज्ञानरहितस्यानुमानगम्यस्य प्रधानस्य जगत्कारणत्वानुपपत्तेः। जडत्वात्। अपि च विश्वं कृन्तति स्वात्मन्युपसंहरति इति विश्वकृत्।'विपर्ययेण तु क्रमोत उपपद्यते च'(२।३।१४) इति न्यायेन स एव उपसंहर्ता। 'यतः सर्वाणि भूतानि प्रभवन्त्यहरागमे। यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये'।(शां.) इति स्मृतेः। जडप्रधानस्य तु कथंचित्कर्तृत्वेऽभ्युपगतेऽन्धसंध्यावन्दनन्यायेन कालज्ञानाभावात्सदैव सृष्टिर्न प्रलयः। अस्य त्वानन्दघनत्वेनावाप्तसर्वकामत्वेऽपि राजवत्कदाचित्कुतूहलवशात् विश्वनिर्माणलीला, कदाचिद्विश्वमुपसंहृत्य कैवल्यरूपेण तूष्णीमवस्थानमुपपद्यते कवित्वात्। 'लोकवत्तु लीलाकैवल्यम्'(२।१।३३)। इति न्यायात्।

ननु नास्य जगत्कारणत्वं युज्यते। वैशेषिका नैय्यायिकाश्च कारणगुणाः कार्यगुणानारम्भन्त इति तस्मान्नित्याश्चतुर्विधाः परमाणवो जगत्कारणं जगुः। कार्यस्य वैलक्षण्यादिति चेत् 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्'(२।२।११) इत्यधिकरणेन परमाणुप्रतिबन्धा ज्ञानावररूपाज्जडं दुःखात्मकं विश्वमुत्पद्यते इति स्वमतदोषं परिहृत्य तन्मतानुसारेण निरवयवानां परमाणूनां निरवयवेश्वरजीवयोः संयोगसंबन्धाभावाद्व्यणुकादिफलोत्पत्तिर्नेत्यादिना परमतं प्रत्युक्तम्। 'यथोर्णनाभिः इति' (मुं.२।७।)'दृश्यते तु' (२।१।६) इति न्यायाच्च गोमयवृश्चिकाद्युत्पत्तिदृष्टान्तेन विलक्षणकार्यकारणभाव उक्तः। तस्मात्कविपदोपलक्षितं सर्वज्ञत्वादिलक्षणं विश्वकारणम्।

ननु कवित्वं नाम सर्वदा ज्ञानसंतानरूपत्वम्। बौद्धमते जीवानामीश्वरस्य च क्षणिकज्ञानसंतानरूपत्वम्। चत्वारो गन्धादिपरमाणुपुञ्जाः।ततो

भूतभौतिकरूपः उभयहेतुकः परमाणुसमुदायोऽङ्गीकृत इति चेत्तन्न संभवति इति समुदायाधिकरणे (२।२।१८) तन्मतानुसारेण जीवेश्वराणां क्षणिकज्ञानसंतानरूपत्वेनानित्यतया क्षणिकपरमाणुमेलनकर्तृत्वस्य, तेषां जडानां स्वातन्त्र्येण मेलनादेश्च प्रत्युक्त्या तन्मतस्य निरस्तत्वात् न जीवेश्वरयोः क्षणिकसंतानरूपत्वम् । एवमन्यान्यप्यधिकरणान्यूह्यानि । विश्वसृष्टौ वेदान्तप्रक्रियैवम्— निर्विकारस्यात्मनो जगद्भावापत्त्यसंभवात् ' मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ' इति श्रुत्युक्ता मायात्राङ्गीकर्तव्या । यद्यप्यैतरेयतैत्तिरीयादौ गुणास्तन्मयी माया च नोक्ता तथापि 'नासीद्रजो नो व्योमापरे यत् । तम आसीत् तमसा गूळ्हमग्रे' इत्यादि श्रुतौ गुणा उक्ताः । गीतायामपि श्रीभगवता हि 'दैवी ह्येषा गुणमयी मम माया' इत्युक्ता । शिष्टैश्चाप्याख्याता । तस्मादाकाशाव्याकृताव्यक्तादिपदवाच्या गुणोपसंहारन्यायेनैतरेयादिप्रोक्तसृष्टिप्रकरणे सोपसंहर्तव्या । उपसंहृतायामपि तस्यां नाद्वैतहानिः । शक्तित्वेनावस्तुत्वेन च मायायाः पृथग्गणनानर्हत्वात् । नहि भृत्येभ्यो वित्तं प्रयच्छन्तस्तवैतद्धनं तव शक्तेश्चैतावदिति विभज्य गणयन्ति । नाप्यवस्तुभूतं चन्द्रबिम्बादिकमपेक्ष्य द्वौ चन्द्रौ वस्तुभूताविति बुद्धिमन्तो व्यवहरन्ति तस्मादङ्गीकृतायामपि तस्यामखण्डैकरसत्वे न कोऽपि विघ्न इति पण्डितोक्तेः। 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति' श्रुतेः बिम्बभूतो दत्ताख्य आत्मा शुद्धसत्त्वमायाप्रतिबिम्बितस्तां वशीकृत्य सर्वज्ञ ईश्वरोऽभूत् । अविद्यायाः शुद्धितारतम्येन वैचित्र्यात्तत्प्रतिबिम्बितास्तद्वशगा अनेके जीवाः 'न कर्माणि विभागादिति' सूत्राभ्यां (२।१।३५,३६) । तेषां कर्मणां चानादित्वात्तेभ्यः कर्मफलदानाय 'वैषम्यनैघृण्ये इति' (२।१।३४) सूत्रोक्तवत् स्वयं पक्षपातित्वनिर्दयत्वरहितः 'सत्यकामः सत्यसंकल्प' इति श्रुतेःसत्यसंकल्पत्वात् स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजतेत्यादिश्रुतेरालोचनपूर्वकविश्व-

सर्जनश्रवणात् 'यस्य ज्ञानमयं तपः' इत्यादिश्रुतेः पर्यालोचनरूपतपसा कृत्स्नप्रसक्त्यधिकरणन्यायेन (२।१।२६) अविकृतस्यैकांशतो विवर्तन्यायेनाकाशादिसर्वमसृजत्। तत्र प्रथमं रोहितशुक्लकृष्णप्रकृतिभावमेत्यैकोत्तरगुणाकाशादिसूक्ष्मभूतान्युद्भाव्य, ततो देवताज्ञानकर्मेन्द्रियप्राणपञ्चकान्युद्भाव्य, तैः सूत्रात्मकं लिङ्गदेहं विरच्य, भोगायतनार्थं 'द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते' इत्याद्यभियुक्तोक्तिवत् पञ्चीकृत-पञ्चभूतेभ्योऽण्डजस्वेदजोद्भिज्जजारजदेहान्, तद्भोग्यान्नपानानि, तन्निवासार्थं यथायथं चतुर्दशभुवनानि निर्माय, तत्र चतुर्विधदेहान् जीवात्मनानुप्रविश्य भूम्यादिष्वन्तर्यामितया नियन्तृत्वेन च स्थित्वा नामरूपे व्याकरोत्। 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' इति न्यायात् (२।४।२०) अन्त्यकार्यपर्यंतमात्मन एव कारणत्वात्। 'एतस्माज्जायते प्राणो मनः इत्यादि श्रुतेराकाशाद्वायुरित्यादावपि आकाशादिभावमापन्नादात्मनः इति ऊह्यम्। 'कारणत्वेन चाकाशादिष्विति'(१।४।१४) न्यायाधिकरणात् हिरण्यगर्भश्रुत्यभिप्रायस्तु सूत्रधार इव परमात्मैव तद्द्वारा चराचरभूतनिर्मातेत्यूह्यम्। 'ईक्षणादि प्रवेशान्ता सृष्टिरीशेन कल्पिता' इति द्वैतविवेकेऽभियुक्तोक्तेः, व्यावहारिकं ईशसृष्टम् अबाधकं, शास्त्रीयं साधकं च द्वैतं; प्रातिभासिकं जीवसृष्टं मानसिकं च द्वैतं बन्धकम्। 'जाग्रदादिविमोक्षान्तः संसारो जीवकर्तृकः' इति तत्रोक्तेः। 'तस्य त्रय आवसथास्त्रयः स्वप्नाः' इति श्रुतेः। संसारो द्वेधा, दैनंदिनव्यवहारो जन्मान्तरस्वीकारश्च। तत्र दैनंदिनव्यवहारे त्रय आवसथा, नेत्रं, कण्ठो हृदयं च, तत्र क्रमेण जाग्रत्स्वप्नसुषुप्त्याख्यास्त्रयः स्वप्नाः देहपातपर्यन्तं जीवेनानुभूयन्ते स्वप्नस्यैकत्वेऽपि विद्यमानं वस्तुतत्त्वं तिरोधाय जायमानोन्यथाप्रतिभासः स्वप्न इत्युक्तस्वप्नलक्षणलक्षितत्वाज्जाग्रन्निद्रे अपि स्वप्न इति श्रुत्यभिप्रायः। जन्मान्तरस्वीकारार्थमपि पितृशरीरं स्वशरीरमिति त्रय आवसथा आमुक्तेः पुनः पुनरनुभूयन्त इति वैदिकसृष्टिप्रक्रियाऽविरुद्धा।

ननु क्वचित्प्राणादिसृष्टिः, क्वचिल्लोकादिसृष्टिः, क्वचित्तेजोबन्नात्मिका, क्वचिदाकाशादिसृष्टिः,क्वचिद्युगपत्सृष्टिरिति परस्परं कुतो न श्रुतिविरोधः इति चेन्न। सृष्टिस्थितिप्रलयनियमनप्रतिपादनाद्या अर्थवादाः। श्रुतेरर्थवादे तात्पर्य्याभावाज्जीवात्म्यैक्यस्य विवक्षितत्वात्तत्रैवादरः । न तत्र परस्परं श्रुतिविरोधः। सृष्टावपि विरोधपरिहारार्थं यावद्विकारं (२।३।७)त्वित्यस्य भाष्ये विभागश्चाकाशस्य पृथिव्यादिभ्योऽगम्यते तस्मात्सोऽपि विकारः एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातमित्युक्तम् । तस्माल्लोकादिसृष्टौ गुणोपसंहारन्यायेन (३।३।५।) न्यूनतापरिहाराय पञ्चभूतादिसृष्टिरुपसंहर्तव्येति दिक् ।

प्रधानस्यात्राप्रामाण्यं तूक्तप्रायम् । यद्यप्यजामेकामिति श्रुतौ लोहितशुक्लकृष्णा प्रकृतिः प्रधानत्वेनाभ्युपगता चेच्चमसाधिकरणे ( १।१।८ ) सा प्रत्युक्ता। संख्योपसंग्रहाधिकरणे ( १।४।११ ) च तन्मततत्त्वश्रुतिरन्यथा व्याख्याता महदहंकारादीनां चाप्रामाणिकत्वं ' इतरेषां चानुपलब्धेः ' ( २।१।२ ) इति सूत्रितम्। परमाण्वादिवादास्तु प्रत्युक्ता एव। अत्रानुमानं,प्रधानादि कर्तृ, न जडत्वान्मृद्वत्। मायासहित आत्मा, जगद्विवर्ताधिष्ठानं तत्त्वं निमित्तोपादानोभयरूपत्वात्, सर्पादिविवर्तोपादानभूतमन्दान्धकाररज्जुवत्। तस्माच्छ्रीदत्ताख्यपरमात्मैव विवर्तन्यायेन विश्वकृत्। एवं च सति प्रकृत्यधिकरणस्य (१।४।२३) 'तदात्मानँ स्वयमकुरुत' इति श्रुतेः नेह नानेति चाम्नानादिन्द्रोमायाभिरित्यपि। 'अजायमानो बहुधा मायया जायते तु स' इति कारिकायाश्चानुपरोधः(३।२४)। विश्वशब्देनात्र जीवो व्यावृत्तः(१।४।२२)पाञ्चरात्राधिकरणेन (२।२।४२)चराचरव्यपदेशादिबह्वधिकरणैश्च जीवस्यात्मनः उत्पत्त्यसंभवः १ जन्ममृत्योर्गौणत्वं २ नित्यत्वं ३ सर्वदा ज्ञत्वं ४ उपाधिवशादणुत्वं ५ आमुक्तेर्द्वैतत्वेन पुण्यादिकर्तृत्वं ६ तच्चास्वाभाविकं ७ चेति ज्ञेयम्। तर्हि तस्य कथ-

मुत्पत्तिरिति चेत्पूर्वोक्तबिम्बप्रतिबिम्बन्यायेनेति काशकृत्स्नीयसूत्रे सूत्रितम्। ( १।४।२२ )

ईदृशो विश्वकृच्छ्रीदत्तः, श्रिया भक्ताभीष्टदसंपत्त्या युतो दत्तः ' मृडयाति मृडिभैर्नृपोऽपि हि बालिशम् ' इति न्यायेन प्राकृत-भक्तकामपूरणत्वं भगवतो युक्तम्। यद्वा, श्रिया मोक्षलक्ष्म्या युतः श्रीदत्तः परमहंस परिव्राजकाचार्योऽवधूतः। यद्वा, श्रीञ् सेवायामिति धातोः श्रयतीश्वरं भजतीति श्रीः, भक्तः उपासकः स चासौ दत्तश्चेति ब्रह्माद्युत्तमदेहेषु प्रविष्टो देवताऽभवत्। मर्त्याद्यधमदेहेषु स्थितो भजति देवतामित्यभियुक्तोक्तेः। अत एव उपासकेन उपासनकालेऽहं१रदेवता-ऽभिन्न इति ध्येयम्। ' अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्यो हमस्मीति न स वेद यथा पशुरेवं स देवानाम् ' इति श्रुत्या भेदज्ञानस्य निन्दितत्वात्। यद्वा,अविद्योपाधिं श्रयति इति श्रीः त्वंपदार्थो जीवः,स एव दत्तस्तत्पदार्थ एवं चाखण्डार्थः तं दर्शयति। स कः, यं प्रत्यगभिन्नपरमात्मानं ॐमिति पदं जगौ अवयवशक्त्या समुदाय शक्त्या च प्रतिपादयामास।

ननु अकारादिसुबन्तपदचय ॐकारो वाक्यमेव कथमेव मुच्यते पदमिति चेन्नैष दोषः। ॐकारस्यावयवशक्त्या वाक्य-त्वेऽपि समुदायशक्त्या पदत्वं वाच्यं योगरूढिस्वीकारात्। तदस्वी-कारेपि सुप्तिङन्तं पदमिति पदत्वम्। कृत्तद्धितसमासाश्चेत्यने-नापि समासस्य प्रातिपदिकसंज्ञाविधानात् सुबन्तत्वम्। कीदृक्पदं, व्यस्तं, भिन्नं, अकारोकारमकाराख्यस्वतन्त्रपदत्रयात्मकम्। एतेनावय-वशक्तिरुक्ता। तथा च समस्तं, अकारोकारमकराख्यपदत्रयकर्मधारय-समासनिष्पन्नम्।" एतेन समुदायशक्तिरुक्ता। इदं च पदद्वयमर्था-भिधेयेऽपि योज्यम्। व्यस्तमोमिति पदं व्यस्तम् अध्यात्माधिदैवताधिभूत-भेदेन भिन्नतया प्रतीयमानं त्वां जगौ। तथा समस्तमोमिति पदं, समस्तं

सर्वात्मकं त्वां जगौ । तदाह । त्रिभिः मात्राख्याकारोकारमकारवर्णैः । तथात्रिभिः अधिदैवताधिभूताध्यात्मभेदैःसर्वप्रपञ्चाकारेण व्याप्तम् एकं ब्रह्म त्वां जगौ, एतेनावयवशक्तिरुक्ता । तथा च वार्तिके—'अधिदैवतमध्यात्ममाधिभूतमिति त्रिधा । एकं ब्रह्म विभागेन भ्रमाद्भाति न तत्त्वतः' इति । अत्रायं प्रकारः व्यष्टौ स्थूलदेहो, जाग्रदवस्था, रजोगुणस्तदभिमानी विश्वः । समष्टौ भूर्लोकः, सृष्टिः, विराट्देहस्तदभिमानी वैश्वानरो ब्रह्म चाकारवाच्यार्थः । व्यष्टौ सूक्ष्मदेहः, स्वप्नावस्था, सत्त्वगुणः, तदभिमानी तैजसः । समष्टौ भुवर्लोकः, स्थितिः, सूत्रात्महिरण्यगर्भो विष्णुरुकारवाच्यार्थः । व्यष्टौ कारणदेहो, निद्रावस्था, तमोगुणः, तदभिमानी प्राज्ञः । समष्टौ स्वर्लोकः, प्रलयोऽव्याकृत, ईश्वरश्च मकारवाच्यार्थः । अर्धमात्रायाः महाकारणदेहः, उन्मन्यवस्था, शुद्धसत्त्वगुणः, पादत्रयोपलक्षितस्तुरीयः प्रत्यगात्मा वाच्यार्थः । ध्वनेर्निर्गुणत्वं निर्विकारत्वं निराकारत्वं चेति चतुर्ष्वप्यकारादिपादेषु सच्चिदानन्दं केवलं चैतन्यं लक्ष्यार्थः । आद्यानां त्रयाणां पद्यतेऽनेनेति पादः इति करणव्युत्पत्त्या पादत्वं, तुरीयस्य चाधिकरणत्वेनेति विवेकः । एवमोंकारस्य चतुष्पात्त्वं कार्षापणवद्व्यवहारार्थं न तु गोरिवेति ज्ञेयम् । माण्डूक्यतापनीयाथर्वशिखादौ एतदन्यच्चाप्युक्तम् । गुणोपसंहारन्यायेन न्यूनतापरिहारायात्र सर्वमुपसंहर्तव्यम् । ऋषिवेदादीनां वाक्यार्थानुपयोगेऽपि उपासनायामुपयोगः । नादाख्यार्धमात्रालक्षितं निर्विकारं ब्रह्म । तच्च पूर्वत्रयापेक्षया तुरीयं न तु वस्तुतः । तच्च उपहितत्वेन सर्वगतम् । 'तुरीयं त्रिषु संततम्' इति कारिकोक्तेः । तत्र सर्वावस्थाद्युपासनार्थं योऽयम् । स्वत उच्चारयितुम अशक्यस्यार्धमात्राख्यनादस्यैकत्वेऽप्यण्वणुतराणुतमभेदेन प्लुतोच्चारणे चिरकालमनुवृत्तस्य तस्यानेकनादरूपत्वात् बहुवचनं न विरुद्धम् । नादस्याणुत्वादिकं गुरुमुखादवगन्तव्यम् । अर्धमात्रारूपेण समस्तमोमिति पदं, समस्तम् ।

मादैः स्वत उच्चारयितुं अशक्यार्धमात्रायाः प्लुतोच्चारणवशेन निष्पाद्यमानैः ध्वनिभिः। अजं, न जायते इत्यजः उपलक्षणात् सर्वविकारशून्य आत्मा।'स वा एष महानज आत्मा' इति श्रुतेः। पूर्वत्रयापेक्षयाऽयं चतुर्थो विज्ञेयः। 'नान्तः प्रज्ञ० चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति श्रुतेः। तं अजं सर्वविकारातीतम् ।'स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया। न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः' इति कारिकोक्तेः। आवरणविक्षेपरहितं यं समुदायशक्त्या जगौ स श्रीदत्त इति संबन्धः। सर्वविकारातीतत्वादखण्डार्थोऽद्वैतः। 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवाद्वैत एव' इति श्रुतेः।

एवं पदार्थाभिधानमुखेनाखण्डैकरसवाक्यार्थसिद्धिरर्थादुक्ता। तथाहि व्यष्टिसमष्टिस्थूलप्रपञ्चोपहितचैतन्यमकारार्थः। तत्र वाच्यार्थस्थूलप्रपञ्चांशत्यागेनाकारेण केवलं चैतन्यं लक्ष्यते। वाच्यार्थभूतव्यष्टिसमष्टिसूक्ष्मप्रपञ्चोपहितचैतन्यमुकारार्थः। तत्र वाच्यार्थभूतसूक्ष्मप्रपञ्चांशत्यागेनोकारेण केवलं चैतन्यं लक्ष्यते। स्थूलसूक्ष्मप्रपञ्चद्वयकारणीभूताविद्यामायोपहितचैतन्यं मकारार्थः। वाच्यार्थभूततादृशाविद्यामायांशत्यागेन मकारेण चैतन्यमात्रं लक्ष्यते। एवं चोभयत्र तुरीयत्वसर्वानुगतत्वोपहितत्वयुतं चैतन्यं प्रत्यग्बोधाख्यं अद्वयानन्दाख्यं चार्धमात्रार्थः। तदुपाधिपरित्यागेन नादाख्यार्धमात्रया चैतन्यमात्रं लक्ष्यते। एवं चतुर्णां सामानाधिकरण्यादभेदबोधे परिपूर्णमद्वितीयचैतन्यमेव सर्वद्वैतोपमर्देन सिद्धं भवति, 'मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे। मुख्यार्थेनाविनाभूतप्रतीतिर्लक्षणोच्यते' इत्युक्तलक्षणया जहदजहल्लक्षणया परित्यक्तानामुपाधीनामविद्यामायातत्कार्यत्वेन मिथ्यात्वात्स्वरूपबोधेन च स्वरूपाज्ञानात्मकमायातत्कार्यनिवृत्तेर्न पृथगवस्थानप्रसङ्गः। नाप्यधिष्ठानसाक्षात्कारानन्तरमापतत् अध्यस्तमुपलभ्यते। तस्माद् द्वितीयशून्यं प्रत्यगभिन्नं

परब्रह्मैव वाक्यार्थः। एतदन्यवाक्यानामुपलक्षणं तेषां परिपूर्णप्रत्यगभिन्नाद्वितीयब्रह्मज्ञापकत्वान्। एतेषां वाक्यानां लिङ्गादिविध्यभावान्न जीवस्य ब्रह्मत्वेनोपासनम्। नापि त्वमिन्द्रोऽसि इत्यादिवदुणवादपरत्वम्। ‘जीवो ब्रह्मैव नापरः’ इत्यादिना मुख्यार्थसंभवे स्तावकगौणवाक्य कल्पनाया अनौचित्यात्। नापि विपरीतबोधकत्वं, युक्तत्वात्। तस्मात् प्रमितिजनकवाक्यस्य श्रद्धया निरन्तरमभ्यासादपरोक्षनिर्विकल्पबोधोत्पत्तिः। एवमद्वितीयब्रह्मवाचकप्रणवार्थानुसन्धानं जपश्च समाधिसाधनत्वेन पतञ्जलिनोक्तम्। समाधिसिद्धिरीश्वरप्रणिधानात्॥ १॥ ईश्वरप्रणिधानाद्वा॥ २॥ तस्य वाचकः प्रणवः॥ ३॥ तज्जपस्तदर्थभावनं चेति॥ ४॥ प्रणवजपस्य प्रणिधानशब्दार्थत्वेन व्याख्यानात्। ‘एतदालम्बनं श्रेष्ठम् ०,’ ‘एतद्ध्येवाक्षरं ब्रह्म०’ तदिति श्रुतेः तस्य सर्वपुरुषार्थहेतुत्वमुक्तम्। ईक्षतिकर्माधिकरणे (।१।३।१३।) शैब्यप्रश्नवाक्यशेषे च ध्यानानुसारेण परापरब्रह्मप्रदो ब्रह्मणः प्रतीकत्वेनालम्बनत्वेन चैष ॐकार उक्तः। सर्वानर्थादवतीति ॐ इति अन्वर्थकः। ऋ. (२।२।३।४।) मुण्डकेऽपि — धन्वाकर्षणादिरूपकेण प्रणवेनात्मना ब्रह्मलक्ष्यवेधनात्तन्मयत्वाख्या सायुज्यमुक्तिरुक्ता। विद्याख्यदेवताज्ञानसमुच्चिताविद्याख्यकर्मानुष्ठानेनामृताख्यसालोक्यादिमुक्तय उक्ताः ता न मुख्याः ‘आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन’ इति स्मृतेस्ततः पुनरावृत्तेः सद्भावात्। ब्रह्मणा सह मुक्तिश्रुतिस्तु शाण्डिल्याद्युक्ताहंग्रहोपासकविषया। ब्रह्मलोको द्वेधा, कर्मिप्राप्यः, क्रममुक्तिभाग्भिर्लभ्यश्च। अहंग्रहोपासकास्तु क्रममुक्तिभाजः, तान्पुनरावृत्तिरहितं ब्रह्मलोकं प्रति नयत्यमानवः पुरुषः इति अप्रतीकालम्बनाधिकरणे उक्तम्। (४।३।१५।) तदधस्तनलोकभाजोऽज्ञावबद्धोपासकाः प्रतीकोपासकाश्च तारतम्येन। तस्मादिहैव परमपुरुषार्थप्राप्त्यर्थं प्रणवमुपास्य देहपातात्पूर्वमेवात्मस्वरूपं बोद्धव्यम्। ‘इह चेदवेदीत्०’

(केन० १-३-१) 'इह चेदशकद्बोद्धुं०' (क० वल्ली ६-४) इति श्रुतेः। अतस्तदर्थमेव विध्यर्थोभयवादविलक्षणं मन्त्रब्राह्मणात्मकमोक्षकाण्डाख्यवेदान्तवाक्यविचारः श्रवणादिरूपः शमादिसंपन्नैर्यासिभिः कर्तव्यः 'आत्मा वाऽरे द्रष्टव्यः' 'शान्तो दान्तः' इत्यादि श्रुतेः शमदमाद्यु० (३।४।२७।) इति न्यायाधिकरणाच्च। तानि वेदान्तवाक्यकुसुमानि पञ्चपञ्चाशदधिकपञ्चशतसूत्रैर्भगवता व्यासेन निबद्धानि। सैव चतुरध्यायी चतुर्लक्षणी शारीरकमीमांसा जीवब्रह्मैकत्वसाक्षात्कारहेतुभूतश्रवणाख्यविचारप्रतिपादकान् न्यायान्प्रदर्शयति।

इह सर्ववेदान्तवाक्यानां साक्षात्परंपरया वा प्रत्यगभिन्नाद्वितीयब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्याये दर्शितः। तत्र प्रथमे पादे स्पष्टब्रह्मलिङ्गयुक्तवाक्यानि विचारितानि। द्वितीये पादे अस्पष्टलिङ्गानि उपास्यब्रह्मविषयाणि। तृतीये पादे अस्पष्टलिङ्गानि प्रायशो ज्ञेयब्रह्मविषयाणि। एवं पादत्रयेण वाक्यविचारः। चतुर्थे प्रधानविषयत्वेन संदिह्यमानानि अजाव्यक्तादिपदानि चिन्तितानीति प्रथमेऽध्यायेवेदान्तानामद्वैते ब्रह्मणि समन्वये सिद्धे तत्र संभावितस्मृतितर्कादिविरोधमाशंक्य तत्परिहारः क्रियत इत्यविरोधो द्वितीयाध्यायेन दर्शितः। तत्राद्यपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीये सांख्यादिमतानां दुष्टत्वं प्रतिपादितम्। स्वपक्षस्थापनपरपक्षनिराकरणरूपपक्षद्वयात्मकत्वाद्विचारस्य। तृतीये महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः पूर्वभागे परिहृतः। उत्तरभागे जीवविषयाणां च। चतुर्थे इन्द्रियादिविषयश्रुतीनां विरोधः परिहृतः। तृतीयेऽध्याये साधननिरूपणम्। तत्र प्रथमे पादे जीवस्य परलोकगमनादिनिरूपणेन वैराग्यमुक्तम्। द्वितीये पूर्वभागे त्वंपदार्थः शोधितः उत्तरभागे तत्पदार्थश्च। तृतीये निर्गुणब्रह्मणि नानाशाखापठितः पुनरुक्तपदोप-

संहारः कृतः। प्रसङ्गाच्च सगुणब्रह्मविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ प्रोक्तौ। चतुर्थे निर्गुणब्रह्मविद्याया बहिरङ्गान्तरङ्गसाधनानि शमादीनि श्रवणमननिदिध्यासनादीनि चोक्तानि ॥ ३ ॥ चतुर्थेऽध्याये सगुणनिर्गुणविद्याफलविशेषनिर्णयः। तत्राद्यपादे श्रवणाद्यावृत्त्या निर्गुणब्रह्म, उपासनावृत्या सगुणब्रह्म वा साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा मुक्तिरुक्ता। द्वितीये म्रियमाणोत्क्रान्तिप्रकारः। तृतीये सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः। चतुर्थे पूर्वभागे निर्गुणब्रह्मविदः अत्रैव विदेहकैवल्यम्। उत्तरभागे सगुणब्रह्मविदो ब्रह्मलोकस्थितिः। एवं सूत्रैः वेदान्तवाक्यजातं निबद्धम्। प्रत्यगभिन्नपरमात्मसाक्षात्कारे वेदान्तवाक्यजातमेव प्रमाणम्। तस्योपक्रमादिलिङ्गैर्भिन्नप्रकरणस्थितत्वात् प्रबलत्वम्। अबाधिताज्ञातार्थज्ञापकं हि प्रमाणं न विहन्यतेऽतस्तत उदिताया विद्याया नैव नाशः। 'प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना। न नश्यति न वेदान्तात्प्रबलं मानमिष्यते' इत्यभियुक्तोक्तेः। ईदृशस्य वेदान्तवाक्यजातस्य अज्ञातज्ञापकत्वेऽपि कर्मानुष्ठानाप्रतिपादकत्वान्न विधित्वं। स्वतःपुरुषार्थपरमानन्दज्ञानात्मकब्रह्माणि स्वार्थे उपक्रमादिलिङ्गवत्तयेदं वेदान्तवाक्यजातं स्वतःप्रमाणभूतं, सर्वानपि विधीनन्तःकरणशुद्धिद्वारा स्वशेषतामापादयति। अन्यशेषत्वाभावाच्च नाऽर्थवादरूपम्। क्वचिदज्ञातज्ञापकमात्रेण विधिः, विधिपदरहितमपि प्रमाणवाक्यं भूतार्थवाद इति चोक्तम्। साकल्येन ईदृग्वेदान्तवाक्यसूचनेन ससाधनपरमपुरुषार्थप्रतिपादकत्वादिदमेवोत्तरमीमांसाख्यशास्त्रं सकलशास्त्रमूर्धन्यं, सर्वेशास्त्रान्तरमस्यैवाङ्गभूतमिदमेव मुमुक्षुभिरादरणीयं भगवत्पूज्यपादश्रीशंकराचार्योक्तभाष्यानुसारेणेति।

इहापि प्रकरणमुखमङ्गलपद्ये एतच्छास्त्रतात्पर्यसूचनेयम्। पूर्वोक्तकर्मोपासनाज्ञापकशिक्षाद्वयतः कर्मकाण्डोक्तकर्मानुष्ठानेन शुद्ध-

चित्तस्य,उपासनया जातैकाग्रयस्य च शमादयोऽर्थसिद्धाः। तदनन्तरमेव मुख्याधिकारिणु उपलक्ष्य जिज्ञास्यस्य ब्रह्मणः प्रणवमात्राभिः जिज्ञासितत्वात् ‘ अथातो ब्रह्मजिज्ञासा ’ इत्यधिकरणमर्थादुक्तम् । ‘ यतो वा ’इति श्रुत्युक्तं जिज्ञास्यब्रह्मणो जगज्जन्मादिकं तटस्थलक्षणं विश्वकृदित्यनेनोक्तमतो जन्माद्यधिकरणं गतार्थम्। कविशब्देन सर्वज्ञकल्पवेदकर्तृत्वसूचनात्सर्वज्ञत्वं सिद्धम्,ततःशास्त्रयोनित्वाधिकरणं दर्शितम् । प्रणवोपलक्षितवेदान्तवाक्यैकगम्यत्वेनास्य मानान्तरागम्यत्वाद् द्वितीयवर्णकसिद्धिः । प्रणवोपलक्षितवेदस्य श्रीदत्ताख्यनित्यसिद्धब्रह्मपरत्वोपन्यासात् समन्वयाधिकरणमर्थादभाणि । प्रणवोपलक्षितवेदस्य हितशंसनत्वात् शास्त्रत्वं,स वेद ॐकारोपलक्षितः प्रतिपत्तिविधिविषयतया न ब्रह्म समर्पयति अपि तु साक्षात्समर्पयति। तस्य तात्पर्यवत्त्वेन तत्रान्वयादिति द्वितीयवर्णकसिद्धिः । विश्वकृतः कवेः चेतनात्मकत्वाच्छान्दोग्ये सद्वाच्यस्य तस्यैव मुख्येक्षितृत्वं न प्रधानस्येति स्पष्टब्रह्मलिङ्गविचारात्मकः प्रथमपाद उपलक्षणाज्ज्ञापितः ।

त्रिभिः मनोमयः प्राणशरीरो भारूपः इति लिङ्गैः, तज्जतल्लतदनाख्यलिङ्गैश्चोपास्यत्वादस्पष्टलिङ्गसमन्वयसाधको द्वितीयः पादो दर्शितः । द्यौः पृथिव्यन्तरिक्षमिति त्रिभिः । मनः प्राण इन्द्रियाणि इति त्रिभिरोतत्वेन आयतनं जगौ। स कविःस्वशब्दसूचक इत्यस्पष्टज्ञेयलिङ्गसाधकतृतीयपादः उक्तः । त्रिभीरथरथिसारथिभिः, पुनस्त्रिभिः प्रग्रहविषयहयैः। यद्वा, त्रिभिरिन्द्रियार्थमनोभिः, पुनस्त्रिभिः बुद्धिमहदव्यक्तैः उत्तरोत्तरमुत्कृष्टत्वेनोक्तैः कृत्वा यं महच्छब्दवाच्यकारणपरं अव्यक्तादव्याकृताच्च परं, सांख्यशास्त्रोक्तप्रधानविलक्षणं पुरुषाख्यं सर्वोत्कृष्टं जगौ। यद्वा अनन्यसाधारणत्वात् परां गतिम्। ‘स त्वमग्निँ स्व०’ ‘येयं प्रेते०’ ‘अन्यत्र धर्मादिति’ नचिकेतः प्रश्नः । त्रिभिश्च अग्निजीवात्मना-

मुपन्यासैरेतद्वैतदित्यभ्यासेन यं जगौ । एवं प्रधानत्वेन सन्दिह्यमानपद-निश्चायकश्चतुर्थपाद उक्तः। एवमन्येऽप्यूह्या विस्तरभयादुपरम्यते ।

अस्य ग्रन्थस्य प्रकरणत्वात् आकरस्थमेव विषयप्रयोजनाद्यूह्यम्।अथापि श्रोतृप्रवृत्त्यङ्गतयाऽत्र प्रकरणेऽपि प्रदर्श्यते । अत्र मात्रालक्ष्यार्थैक्यस्य समर्थनाज्जीवब्रह्मैक्यं विषयः । अनन्यसाधारणत्वादनर्थभूतद्वैतनिवृत्तिः प्रयोजनम् । ॐकारोपासकः संन्यास्यधिकारी । एकप्रयोजने प्रतिनिबद्धार्थजातस्य कार्त्स्न्येन प्रतिपादको ग्रन्थः शास्त्रमुच्यते, स एवाकरः ईदृग्विधमेवोत्तरमीमांसाशास्त्रं, अयोगव्यवच्छेदात् । तेनास्य संबन्धः, प्रकरणत्वात् । 'शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् । आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः' इति तल्लक्षणात् । अत्रावतेः कर्मत्वेन श्रोतृवक्तृग्रहणान्मामवत्वित्यादिवच्छान्तिरुक्ता । तस्या ब्रह्मविद्यादौ आवश्यकत्वात् ॥ १ ॥

सर्वाभयप्रदः सर्वन्यासपूर्वकमग्रजः ।
यदाश्रितोऽप्यसम्पद्यं याति दत्तं भजामि तम् ॥२॥

पुनर्मङ्गलपद्यद्वयेनाधिकारिलक्षणं ज्ञापयति सर्वेति। पुत्रैषणा वित्तैषणा लोकैषणा परित्यक्ता ।'अभयं सर्वभूतेभ्यो मत्त'इति श्रुतेः। 'यत्किंचिद्बन्धकं कर्म कृतमज्ञानतो मया । प्रमादालस्यदोषोत्थं तत्सर्वं संत्यजाम्यहम् ॥ १ ॥ त्यक्तसर्वो विशुद्धात्मा गतस्नेहशुभाशुभः । एष त्यजाम्यहं सर्वं कामभोगसुखादिकम् ॥ २ ॥ रोषं तोषं विवादं च गन्धमाल्यानुलेपनम् । भूषणं नर्तनं गेयं दानमादानमेव च ॥ ३ ॥ नमस्कारं जपं होमं याश्च नित्यक्रिया मम । नित्यं नैमित्तिकं काम्यं वर्णधर्माश्रयं च यत् ॥ ४ ॥ सर्वमेव परित्यज्य ददाम्यभयदक्षिणाम् । पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः । करिष्ये प्राणिनां पीडां प्राणिनः सन्तु निर्भयाः' ॥ ५ ॥ इत्युक्तप्रकारेण

सर्वसंन्यासपूर्वकं सर्वाभयप्रदः । अग्रजो ब्राह्मणो नान्यः । 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यते ' इति स्मृतेः दण्डग्रहणादिरूपे विविदिषाख्ये संन्यासे विप्रस्यैवाधिकारः । विद्वत्संन्यासे तु क्षत्रियवैश्ययोरपि । नन्वस्य साधनसम्पदपेक्षेति चेत्तत्राह।असम्पदपि यमाश्रितो यं भगवन्तमभेदेन याति प्राप्नोति मुच्यत इत्यर्थः। महाभारते 'या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रयः ' इति । भागवतेऽपि ' धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः । एकं ह्येव हरेस्तत्र कारणं पादसेवनम् इति । अत्रैकादिपदैरन्यसाधनानपेक्षता भक्तियोगस्योक्ता । ज्ञानादेश्च हरिपदसेवनसापेक्षता चात्र ध्वनिता । तथा च तत्रैव स्पष्टम् ।'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। योगेन दानधर्मेण श्रेयोभिरितरैरपि । सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसेति'। ईदृशं तं दत्तं परमात्मानं भजामि। भजनं त्वत्र कीर्तनरूपं ।'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्' इति स्मृतेः अत्र कृताद्यधिकरणकध्यानादिफलार्थे कल्यधिकरणकं कीर्तनं विधीयत इति स्मृतिवाक्यार्थः । स्मरणं प्रणवार्थतो यतेस्तेन समाधिसिद्धिरपि ।'यतिनैकान्त सेविना। दीर्घं प्रणवमुच्चार्य मनोराज्यं विजीयते । जिते तस्मिन्मनोराज्ये मनस्तिष्ठति मूकवत् । एतत्पदं वासिष्ठेन रामाय बहुधेरितम् । दृश्यं नास्तीति० परा निर्वाणनिर्वृत्तिरित्यभियुक्तोक्तेः । केवलप्रणवानुष्ठानाभावाद्यतीतरेषां तथैव सोऽहमिति कीर्तनं तत्राऽपि परोक्षतः ॐकारः । यदुक्तम् ' सकारार्णं हकारार्णं लोपयित्वा ततः परम् । प्रणवो भवेदिति' । कलौ संन्यासनिषेधः त्रिदण्डपरः इति प्राञ्चः । अन्ये तु 'यावद्वर्णविभागोस्ति यावद्वेदः प्रवर्तते । अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे ' इति वचनबलात् कलिप्रवेशमारभ्य गवालम्भादिवर्ज्यमेवाग्निहोत्रं संन्यासं च वेदप्रवृत्तिवर्णविभागदर्शनपर्यन्तमेव, ततः परं निषेधवचनं मानमित्यभ्युपगच्छन्ति ॥२॥

षट्कर्ता षड्विहीनो यं श्रितः पावनभावयुक् ।
याति मन्दविरागोऽपि यं तं दत्तगुरुं भजे ॥ ३ ॥

भगवदाश्रितोपि यतिरापाततः स्नानादिरूपबहिरङ्गसाधनमपि कुर्यात् विहितत्वादिति मङ्गलार्थतो दर्शयन्नधिकारिणं विशेषणं ददाति 'भिक्षाटनं जपो ध्यानं स्नानं शौचं सुरार्चनम् । कर्तव्यानि षडेतानि सर्वथा नृपदण्डवत् ।' नात्रानुष्ठानक्रमविवक्षा पाठक्रमापेक्षया शास्त्रोक्तानुष्ठानस्य बलवत्वात् । एवं स्मृत्युक्तषट्कर्मकर्ता । 'मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च । दिवा स्वापश्च यानं च यतीनां पतनानि षडित्युक्तेः' मञ्चकादिषड्भिर्विहीनः । स्वशाखोपनिषद्गीता विष्णुनामसहस्रकम् । श्रीरुद्रं पौरुषं तारं नित्यमावर्तयेद्यतिरिति-षट्कस्य जप एवान्तर्भावः । ईदृशो मन्दविरागोऽपि यमाश्रितोऽधिकारी । ननु तीव्रविरागे शक्तस्य बहूदकन्यासोऽशक्तस्य कुटीचकाख्यः । तीव्रतरवैराग्ये हंसाख्यो, मन्दे न कोऽपीतिजीवन्मुक्तिविवेकादौ स्फुटमुक्तम् । कथमत्रोच्यते मन्दविरागोपीति । विरागं विनाऽऽश्रमाचारभ्रष्टत्वेन पातोऽपि स्मर्यते । 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः । एकदण्डं समाश्रित्य जीवन्ति बहवो नराः।नरके रौरवे घोरे कर्मत्यागात्-पतन्ति ते । काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः। स याति नरकान्-घोरान्यावदिन्द्राश्चतुर्दशेति'। 'बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि । शुनां तत्वदृशां चैव को भेदोऽशुचिभक्षणे ' इत्यादिना बुद्धाद्वैतसतत्त्वस्यापि यथेष्टाचरणं निन्दितं किं पुनरबुद्धस्य यतेः । अपि तु कर्मब्रह्मोभयभ्रष्टं तंत्यजेदन्त्यजं यथेत्यादिना मानश्रवणादिति चेत् । बाढम् । इयं स्मृतिर्भगवन्तमनाश्रित्य वैराग्यं विना जीवनाद्यर्थकृतसंन्यासस्य नरकप्रतिपादिका । यस्तु- 'त्राहि मां सर्वलोकेश वासुदेव सनातन ।

संन्यासो मे जगद्योने पुंडरीकाक्ष मोक्षद । युष्मच्चरणमापन्नं त्राहि मां पुरुषोत्तम ' इति यं भगवन्तमाश्रितः प्रपन्नः । पुनश्च पावनभावयुक् । भावो भक्तिः।सर्वापेक्षाधिकरणे(३।४।२६) सर्वसाधनापेक्षोक्तेः।'नायमात्मा'इतिश्रुत्या 'भक्त्या मामभिजानाति०''पुरुषः स परः पार्थ०'इत्यादिस्मृत्या च मुक्तौ भक्तेरावश्यकत्वात्। भक्तियोगे तु दुराचारिणो मन्दविरागस्यापि अधिकारो गम्यते । ' अपिचेत्सुदुराचारो० निगच्छति' । 'न निर्विण्णो नातिसक्तो भक्तियोगोस्य सिद्धिदः' इत्यादिवचनेभ्यः । नैवं दुराचारिणोऽपि दृढवैराग्याद्यभावेऽपि वेदान्तश्रवणाद्यनुष्ठितौ ज्ञानोत्पत्तिर्भविष्यतीति क्वाप्युपलभ्यते । न च यथोक्ताधिकारसंपत्तिं विनाऽनुष्ठितं साधनं किमपि फलाय कल्पते । यस्मादेवं तस्मात्पावनभक्त्या युग्यमाश्रितो मन्दविरागोऽपि यं यातीति साधूक्तम्। ईशाश्रयामन्दविरागस्यापि निःश्रेयसं चेत्किमु वक्तव्यं तीव्रादिविरागयुक्तानामिति कैमुत्या सिद्धम् । ननु तर्हि भक्तियोगेनैवालं किमाश्रमोक्तकर्माचरणाडम्बरविधिनेति चेत् । ज्ञानदार्ढ्यपर्यन्तं श्रुतिमर्यादापालनेनाश्रमसिध्यर्थं लोकसंग्रहार्थं चापाततः आश्रमधर्माचरणं, न चोदनया। यतोऽयं विध्याभासः। श्रुतिस्तावत्।'विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्ष्यान्नो ब्रह्मभूयाय भवति । शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः पुत्रैषणायाश्च० व्युत्थायाथ भिक्षाचर्यां चरन्ति। अथ परिव्राडेकशाटीपरिहितो मुण्डोदरपाव्यरण्यनित्यो भिक्षार्थं ग्रामं प्रविशेदासायं प्रदक्षिणेनाविचिकित्सयन्सार्ववर्णिकभैक्ष्यचर्यमभिशस्तपतितवर्ज्यमयज्ञोपवीती शौचकामानिष्ठमेकं वैणवं दंडमादत्ते सखे मां गोपायेति। सार्ववर्णिकभैक्ष्यन्तु सर्वान्नानुमत्यधिकरणे (३।४।२८) प्राणसङ्कटसमय एवापत्कालविषयकं न तु स्वस्थावस्थायां इति व्यवस्थापितम्। तस्मात् षट्कर्तेत्यादि सुस्थितम् । दत्त एव गुरुस्तं नामरूपोपाधिपरित्यागादाविर्भूतस्वरूपेणाहं भजे, प्रपद्ये । अखण्डैकरसत्वापत्तिपर्यन्तं

शिष्याचार्यत्वदृष्टिर्वाक्यार्थप्रकाशायेति श्रूयते 'यस्य देवे परा भ०'। 'नैषा तर्केण म० प्रेष्ठ' इत्यादिना। मुक्तौ तु न जीवेश्वराचार्यादिविभागः। 'श्रेयांसि बहुविघ्नानि' इति विघ्नबाहुल्ये मङ्गलबाहुल्यापेक्षा॥ ३॥

सर्वात्मेशस्य हृत्स्थस्यास्तान्यभावो यमातिगः।
उत्स्वभावोऽनृणो भक्तः प्रियो यस्य नमामि तम् ॥४॥
उपाधिनाऽऽत्मनानात्वं कर्तृतां वीक्ष्य भोक्तृताम्।
विशारदोप्यनित्यत्वं लोककालागमात्मनाम् ॥५॥
ततो निर्विद्य संन्यस्य प्रवृत्तिं प्रेयसीमपि।
विशारदं ब्रह्मनिष्ठं श्रोत्रियं गुरुमाश्रयेत् ॥ ६ ॥

ननु 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते'।'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति श्रुतिस्मृतिभ्यां ऋणापाकृतिं विना कथं, केन वा मनो मोक्षे निवेशनीयमितिचेदीशभक्तस्यायं न नियम इति वदन्नमति–सर्वेति। सर्वेषामात्मा, ईशश्च श्रीदत्तः, तस्य प्रियो भक्तः अनृणः, भवतीति शेषः। कथंभूतस्य सर्वात्मेशस्य, हृत्स्थस्य। अनेन भजनसौलभ्यं, ततः शान्तिः, शाश्वतस्थानावाप्तिश्च 'ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि० तमेव शरणं० तत्प्रसादा० शाश्वतम्' इति स्मृतिमतं ज्ञापितम्। सर्वात्मनः भजने कृते वृक्षमूलसेचनात् स्कन्धादितृप्तिवत् ब्रह्मादिस्तम्बान्तानां तृप्तिरर्थादुक्ता। अतो नाभक्तवत्पोष्यादीनां अन्नादिना, यज्ञादिभिर्देवादीनां चानर्चनेपि न तत्कृतविघ्नः। कुतः, सर्वेशस्य भक्तत्वात्। भगवानेवेदं सर्वमिति बुध्या अस्तः,त्यक्तः,अन्यभावो येन सोस्तान्यभावः। अतोस्य न भयं 'अभयं प्रतिष्ठां वितेन्द' इति श्रुतेः।अन्यो मोक्षमार्गे प्रवृत्तश्चेत्तस्य यथा विघ्नो न तथास्येतिभावः। शास्त्रीयप्रयत्नाद्भजनाद्वा उत्, उत्कृष्टः

स्वभावो यस्य सः उत्स्वभावः । 'अपिचेत्सुदुरा० हि स' इति स्मृतेः । एवं विहितकर्मनिवृत्तिः । भजनवशात् उद्गतः स्वभावो यस्य इति विकर्मनिवृत्तिः, कथंचित् प्रमादादिनोत्पतितं पापं चेत् हृत्स्थो भगवान् सद्य एव क्षालयेत् । अस्तु नामेदं,दण्डधरो यमो नैतन्मन्येत चेद्भजन-प्रभावान् यमं, मृत्युं, अतीत्य गच्छतीति यमातिगः । एतेन, नायं यमदण्डच इत्युक्तं भवति । 'स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः खलु तस्य कर्णमूले । परिहर मधुसुदनं प्रपन्नं प्रभुरहमन्यनृणां न वैष्णवानाम् । दामोदराच्युत जनार्दन वासुदेव त्याज्या भटा य इति सन्ततमामनन्ति इति स्कान्दे यमोक्तेः । 'वैवस्वतं सङ्गमनं जनानां यमं राजानम्' इतिश्रुतिस्त्वभक्तपापिपरेति 'संयमने त्वनु भूयेतरेषामारोहावरोहौ तद्गति दर्शनात्' ( ३।१।१३ ) इत्यनेन सूत्रेण सूत्रितं भजनवैभवाद्यमनियमातिगोपि इति वा बोध्यम् । ननु 'श्रुति-स्मृती ममैवाज्ञे इत्यपीश्वरभाषितं' इत्युक्तेः ईश्वरः स्वाज्ञाभङ्गं कथं सहेतेति चेत्तत्राह । प्रियो भक्त इति । ननु नायं पापक्षयार्थं भजतीति चेत् भजनप्रभावाद्भगवान्हरिर्हृत्स्थश्चेत्सङ्कल्पाभावेऽपि वस्तुशक्त्या पापं हरत्येव ।'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः। अनिच्छयापि संस्पृष्टो दहत्येव हि पावक' इति स्मृतेः । न हि वस्तुशक्तिः स्वकार्यार्थं पर-सङ्कल्पमपेक्षते । यस्य ईदृशो भक्तोऽनृणो भवति तं श्रीदत्तं नमामि इत्यन्वयः । अतो ऋणापाकरणं विनापि सर्वं संन्यस्य भगवन्तं भजति चेदवश्यमेव मुच्यत इति भावः॥४॥'ब्रम्हसंस्थोऽमृतत्वमेति'इति लिङा दिविधिपदरहितश्रुतेरन्धपरम्परया संन्यासादर इति जैमिनीयमतं परामर्शी सूत्रेणा(३।४।१८) नूद्य उत्तरसूत्रचतुष्केण राद्धान्तं संन्यासमुपदेष्टुं, मुमु-क्षुर्विवेकेन सर्वतो विरज्य प्रेयसीमपि प्रवृत्तिं त्यक्त्वा, मोक्षार्थं सद्गुरु मेवाश्रयेदित्याह युग्मेन । मुमुक्षुः सर्वतो निर्विद्य, प्रेयसीमपि प्रवृत्तिं-त्यक्त्वा गुरुमाश्रयेत् । ननु चैवं जैमिनीया मन्यन्ते-अहंप्रत्ययविज्ञेयो

ज्ञातव्यः सर्वदैव हीति अहंप्रत्ययविज्ञेय एवात्मा प्रतिशरीरं भिन्नः कर्तृभोक्तृरूपश्च, न तु सत्स्वरूपभूतो निर्विकारः परमात्मा, तस्य स्वर्गादि-भोगलोकानां अनित्यत्वे, भोगकालस्य वा तदुपायभूतकर्मबोधकागमस्य वा, भोक्तुरात्मनोऽनित्यत्वे वा वैराग्यं स्यान्न त्वेतदस्ति। मायामयत्वेन भोग्यानां विच्छेदेपि न वैराग्यसंभवः। स्रक्चन्दनवनितादिभोग्यभावानां प्रवाहरूपेण स्थितिर्हि नित्या। 'न कदाचिदनीदृशं जगत्'इत्युक्तेः। ततः कश्चिदीश्वरोऽपि नैव कर्ता, धर्म एव फलदातेति। 'धर्मं जैमिनिरत एव' इति न्यायात् (३।२।४०) न चात्मस्वरूपभूतं नित्यमेकं ज्ञानं। तच्च घटाद्याकारेण जायते भिद्यते चातो न नित्यज्ञानरूपवानात्मा। किंतु ज्ञानपरिणामवान्। तर्हि आत्मनो विकारित्वेऽनित्यत्वप्रसङ्गेनापसिद्धान्त इति चेद्विकारित्वेपि तस्यानित्यत्वं न। 'विक्रिया ज्ञानरूपास्य न नित्यत्वे विरोत्स्यते'इत्युक्तेः अतो मुक्तिदशायां इन्द्रियरहितस्य तस्य परिणामासंभवाज्जडत्वेन तत्प्राप्तेरपुरुषार्थत्वात् गुरुपसत्त्यादिना संपादनीयं तत्त्वज्ञानं क्षयरोग एव। तस्मात्कुतः प्रेयसीं प्रवृत्तिं संन्यस्य गुरुराश्रयणीय इत्यत आह। उपाधिनाऽविद्योपाधिनाऽऽत्मनां, जीवानां, नानात्वं, न स्वाभाविकम्। तत्त्वज्ञानेनोपाध्यपाये शुद्धो जीवः शुद्धेनानन्तेन ब्रह्मणैकीभावं प्राप्नोतीति 'अतोनन्तेन'इति सूत्रेण सूत्रितम् (३।२।२६) तथा विज्ञानमयकोशाख्येनोपाधिना जीवात्मनः कर्तृत्वं, न स्वाभाविकं। तथानन्दमयकोशाख्येनोपाधिना भोक्तृत्वं, न तु स्वतः। अपिशब्दः समुच्चयार्थः। एवमुपाधिवशादात्मनां जीवानां नानात्वं, कर्तृत्वं, भोक्तृतां चापि गुरूपदेशात्प्रमाणयुक्तिभ्यां च वीक्ष्य, पर्यालोच्य। तथा लोककालागमात्मनां चानित्यत्वं वीक्ष्य। लोकः स्वर्गलोकः, दर्शपूर्णमासादियजनेन जय्यः। कालः अक्षय्यादिः, प्राशस्त्यबोधकः श्रुत्युक्तो भोगकालः। आगमः, तदुपायभूतप्रधानाङ्गकर्मादिबोधकः कर्मकाण्डाख्यवेदः। आत्मानः,

उपाधिविशिष्टा जीवाः। 'नासदासीत्'इत्यादिश्रुत्या एषां त्रयाणां लोक कालागमानां सर्वथाऽभाव उक्तः। महाप्रलये ब्रह्माण्डपिण्डो भस्मसाद्-भवति, तदा कुत एषां वार्ता । तर्हि तदानीं सर्वजीवानामपि मुक्ति-रितिचेन्न। तदा ज्ञानसाधनसामग्र्यभावात् बीजभूतकर्मवासनामानसैः सहाऽव्यक्ते लीनानामपि तेषां तत्कर्मभोगार्थं कल्पान्तरे पुनरुद्भवः स्मर्यते। 'अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे' इत्यादिना। अत एव 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभं'। 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिवचनैरबोधान्न मुक्तिं प्रत्याशापीति। तर्ह्यनित्यत्वप्रवाहे लोककालागमात्मनामित्यत्रानित्यत्वमात्मनोपि कुत उक्तमिति चेत्। 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति श्रुतिः औपाधिकजीवविनाशं प्रतिपादयति तदेवाङ्गीकृत्योक्तम्। पार-मार्थिकजीवात्मनो नैव नाशः। 'अविनाशी वाऽरेऽयमात्मानु-च्छित्तिधर्मा' इति श्रुतेः। ततस्तेभ्यः, पूर्वोक्तेभ्यो लोकादिभ्यो, निर्विद्य, विरज्य। 'अन्यच्छ्रेयोन्यदुतैव प्रेय' इत्यादिना काठकोक्तनिरतिशय-सुखास्पदश्रेयःप्राप्त्यर्थं विद्यमानां स्त्रीपुत्रसुखादिलक्षणां दुःखैक-बीजां अनित्यां, तत्कालं प्रेयसीमपि प्रवृत्तिं त्यक्त्वा 'न्यास एवात्यरे-चयत्'। 'संन्यस्य श्रवणं कुर्यात्'। 'नैष्कर्म्यसिद्धिं परमां संन्या-सेनाधिगच्छति' इति श्रुतिस्मृत्यनुशासनेन नैष्कर्म्यसिद्धिप्राप्त्यर्थं विधिवत्संन्यस्य। विशारदः, स्वकार्यकुशलो मुमुक्षुः मोक्षेच्छुः साधिष्ठा-नो जीवः। 'साधिष्ठानो विमोक्षादौ जीवोधिक्रियते न तु। केवलो निरधिष्ठानो न भ्रमः क्वचिदीक्ष्यते' इत्यभियुक्तोक्तेः। अधिष्ठानं, प्रत्यक्कूटस्थसाक्षिचैतन्यं तद्रूपोस्मीति श्रवणादावनुसन्धाता मुमुक्षुः। श्रोत्रियं, शाब्दब्रह्मनिष्णातं। ब्रह्मनिष्ठं, संजातापरोक्षसाक्षात्कारं। विशारदं, लौकिकादिदृष्टान्तोपपत्त्यादिना शक्तिपातेन च वाक्यार्थग्राह-यितारं, गुरुम्। गुकारोऽज्ञानं रुकारस्तन्निवर्तकस्तद्योगात्सनिदानाज्ञान-

तत्कार्यनिवर्तकमाचार्यम्। प्रणिपातादिलक्षणगुरूपसत्तिप्रकारेणाश्रयेत्। अत्र मूलभूता श्रुतिः 'परीक्ष्य लोकान्कर्म०' ॥ ५ ॥ ॥ ६ ॥

**भक्त्या गुरुमुपासीनः श्रद्धालुस्तत्परो वशी ॥**

**स्थेयःशमोनन्यधिया श्रवणादि ततश्चरेत् ॥ ७ ॥**

गुरूपसत्त्यनन्तरं सेतिकर्तव्यताकं विधिमाह—एवं गुरूपसन्नो मुमुक्षुः। भक्त्या, ईश्वराभिन्नोऽयं गुरुरित्यनुरक्त्या। गुरुमाचार्यम्। सेवाप्रणिपाताभ्यां, समयानुसारिप्रश्नेन च ब्रह्मजिज्ञासार्थं सर्वदा तन्निकटे उपासीनः, उपविष्टः वर्तमान इत्यर्थः। अन्तेवासित्वात्। यद्वा, यथोचितासनोपविष्टः। श्रवणादौ आसनस्य नियतत्वात्। "आसीनः संभवात्" (४।१।७) इति न्यायाच्च। श्रद्धयाऽऽस्तिक्यबुद्ध्या, युक्तः श्रद्धालुः, एतेन नास्तिक्यजल्पवितण्डादिरहित इति सूचितम्। 'असन्नेव' इति श्रुतिरपि सत्त्वमभ्युपगच्छति। तत्परः, गुरुतत्परः। अथवा भक्तिपदेन तत्परत्वमुक्तप्रायम्। तदेव, ब्रह्मैव, परं, श्रवणादिनाऽऽदरणीयं यस्य स तत्परः। वशी, संयतेन्द्रियः "श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः" इति स्मृत्या श्रद्धावतः, संयतेन्द्रियस्य, श्रवणादितत्परस्य च ज्ञानलाभस्योक्तत्वात्। स्थेयान्, स्थिरतरः, शमो यस्य स स्थेयःशमः। सर्वसाधनसंपन्नस्यैव शमः स्थिरतरो भवेन्नान्यस्येत्यत्र भगवत्पूज्यपादाः "प्राच्योदीच्याङ्गसहितः शमस्तिष्ठति नान्यथा। प्राच्यं विवेकविरती उदीच्याङ्गं दमादयः" इति। एतेनान्तरङ्गभूतशमादिसर्वसाधनसंपन्नः इति अर्थादुक्तं भवति। "शमदमाद्युपेतः स्यात्तथापि" (३।४।२७) इत्यधिकरणन्यायात्। ईदृशो मुमुक्षुरनन्यधिया, श्रवणादिकालेऽपि ब्रह्माभिन्नोऽस्मीति बुद्ध्या। 'अनन्य-[1]

---

१. टीप—प्रोच्यमानब्रह्मात्मभूतेनाचार्येण प्रोक्ते आत्मनि, अगतिः अनवबोधः अज्ञानमत्र नास्ति। अनन्ये, अपृथग्दर्शिना आयार्येण, प्रोक्ते आत्मनि, गतिः, अस्ति नास्ति इत्यादि लक्षणाऽनवगतिः चिन्ता नास्ति। अनन्यस्मिन्नात्मनि अन्यावगतिः नास्ति, अतोऽवगन्तव्याभावाच्च गतिरवशिष्यते।

प्रोक्ते गतिरत्र नास्ति' इति काठकश्रुतिपादभाष्यं चतुर्भिरथैरुपेतमत्रानुसन्धेयम्। ततो,गुरोःसकाशात,नतु स्वबुद्ध्यभ्यूहेन। श्रवणादि, ब्रह्मसाक्षात्कारं प्रति शमादिभ्योऽप्यन्तरङ्गसाधनानि पाण्डित्यबाल्यमौनशब्दितानि कहोलब्राह्मणोक्तानि श्रवणमनननिदिध्यासनानि, आदिशब्देन, इमानि सहकार्यन्तराणि ग्राह्याणि सहकार्यन्तरविध्यधिकरणे (३।४।४७) ब्रह्मसाक्षात्कारोद्देशेनोक्तानि। तत्र त्रयाणां मध्ये श्रवणमनने बहुकालमनुष्ठातव्ये। वर्णजातिकुलदेहाद्यभिमानो दृढश्चेत्पक्षेण तृतीयं निदिध्यासनं बहुकालमनुष्ठेयम्। ईश्वरानुग्रहाद् दृढवैराग्येणाहङ्कारशैथिल्ये एषां स्वल्पानुष्ठानमिति दिक्। कहोलश्रुतिस्तु "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च निर्विद्याथ ब्राह्मणः" इति। पाण्डित्यं, श्रवणं, निर्विद्य, संपाद्य। तिष्ठासेत्, स्थातुमिच्छेत्। बाल्यं, मननम्। मौनं, निदिध्यासनम्। अमौनं नाम पाण्डित्यं बाल्यं च। ब्राह्मणो, मुख्यो ब्रह्मज्ञ इति। श्रुत्यर्थोऽन्यः सुगमः। ज्ञानवैराग्याद्यप्राकट्येन बालवन्मानावमानदम्भाहङ्कारादिराहित्येन स्थातुमिच्छेत् इत्यर्थो "अनाविष्कुर्वन्नन्वयात्" (३।४।५०) इति सूत्रेण सूत्रितः। तादृशस्यैव मननेऽधिकारित्वात् ॥ ७ ॥

पापहृत्कृच्छ्रफलदशाब्दज्ञानं तु संशयान् ॥
निवर्तयेत्स्त्रयं नश्येदसत्त्वावरणं तदा ॥ ८ ॥

ननु "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इति वचनात् पापक्षयं विना कथं ज्ञानोत्पत्तिरत आह—मुमुक्षोः शाब्दज्ञानमेव पापहरम्। 'ज्ञानाग्निः सर्व० त्रियत' इति स्मृतेः। ननु स्वप्नोत्थितस्य प्रबोधे स्वप्नपापनाशवत् अपरोक्षज्ञानेन प्रबुद्धस्य पापदाहद्योतिकेयं स्मृतिः। भगवत्पूज्यपादाः अपि "स्वप्ने कुर्वन्नगम्यागमनमुखमघं तेन न प्रत्यवायी" इत्याद्याहुः,तस्मान्न शाब्दज्ञानं पापनाशकमिति चेन्न। शाब्द-

ज्ञानस्यैव बुद्धिपूर्वकृतपापानामपि दाहकत्वम्। "परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम्। बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत्" इत्यभियुक्तोक्तेः। अपरोक्षात्मज्ञानं संसारकारणाज्ञानदाहकमिति तत्रैवोक्तम्। "अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम्। संसारकारणाज्ञानतमसश्चण्डभास्करः" इति। पापनाशस्तु कृच्छ्रानुष्ठानेन इति चेत्। श्रवणमपि कृच्छ्रफलदं स्मर्यते। 'दिने दिने च वेदान्तश्रवणाद्भक्तिसंयुतात्। गुरुशुश्रूषया लब्धात्कृच्छ्राशीतिफलं लभेत्' इति। ननु यावत्संशया न निवार्यन्ते तावन्नायं लोको, नापि परः, न सुखं चेति "नायं लोकोऽस्ति न परो न सुखं संशयात्मनः" इति स्मर्यते इत्यत आह—पापहृत्कृच्छ्रफलदशाब्दज्ञानं तु संशयान् निवर्तयेत्। संशयास्तु, आत्मा देहादिव्यतिरिक्तोऽस्ति न वेत्याद्याः। ननु विक्षेपावरणरूपायाः मायायाः आवरणं द्विविधम्। असत्त्वावरणमभानावरणं चेति। तत्र वस्तु नास्तीति व्यवहारकारणमसत्त्वावरणं यावदस्ति तावत् बाल्येन तिष्ठासेदिति श्रुत्युक्तप्रवृत्तिः कथमितिचेत्। पूर्वोक्तविशेषणविशिष्टशाब्दज्ञानं यदा भवेत्तदा नान्तरीयकत्वादसत्त्वावरणं स्वयमेव नश्येत्। तदाऽस्माकमपरोक्षत्वाभावेपि ब्रह्मास्तीति व्यवह्रियते ततोऽपरोक्षसाक्षात्कारार्थं मुमुक्षवः स्वयमेव मननादिषु प्रवर्तेरन्निति भावः ॥ ८ ॥

शुङ्मोहपाशजन्मान्तक्लेशकामक्रियालयः ॥
स्वात्मन्येकतया दृष्टे संशयानां कुहान्तरम् ॥ ९ ॥

गुरुशास्त्रोक्तरीत्या श्रवणादौ अनुष्ठिते संजातापरोक्षसाक्षात्कारेण शोकादयोपि नश्यन्ति इत्याह- शुक्, शोकः। अन्तः, मृत्युः। स्वात्मनि, स्वरूपभूते आत्मनि, प्रत्यगात्मनि। एकतयाऽखण्डैकरसत्वेन, दृष्टेऽपरोक्षीकृते, सोहमिति साक्षादनुभूते सति, शोकादीनां लयो भवेत्। श्रूयते च "तरति शोकमात्मवित्"। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः"। "ज्ञात्वा देवं सर्वपाशापहानिः। क्षीणैः क्लेशैः

जन्ममृत्युप्रहाणिः" ॥ "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ॥ परश्चासाववरश्चेति परावरः, प्रत्यगभिन्नः परमात्मेति परावरशब्दार्थः। "घृणा लज्जा भयं शङ्का जुगुप्सापि तथैव च। कुलं शीलं च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः" इति पाशवद्बन्धकत्वेन जन्ममरणप्रदत्वात् एषां पाशसंज्ञा, अविद्यास्मितारागद्वेषाभिनिवेशा इति पञ्च क्लेशाः। एषां लक्षणानि पातञ्जले प्रथमपादेऽभिहितानि। क्रियाशब्देन अनिष्टेष्टमिश्रफलदं कर्म ज्ञेयम्। कामलय इत्यनेन अत्र ग्रन्थिभेदो व्याख्येयः। काठके च "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति श्रुतेः वाक्यशेषभूतेयं श्रुतिः "यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्" इत्यनया श्रुत्याहङ्कारममकारादयश्च ग्रन्थिवद्दृढप्रत्ययाः। "अहङ्कारचिदात्मानावेकीकृत्याविवेकतः। इदं मे स्यादिदं मे स्यादितीच्छाः कामशब्दिताः" इत्युक्तेः कामा ग्रन्थिशब्दिता इत्यवगम्यन्ते ते सर्वे प्रभिद्यन्ते त्रुट्यन्ते इति ज्ञेयम्। तस्मात् कामलय इत्यनेनात्र ग्रन्थिभेद उक्तः। एवं सति संशयानां कुहान्तरं, स्थातुं कुत्रावकाशः, न कुत्रापीति भावः ॥ ९ ॥

**भोक्त्रापत्त्यारम्भणाभ्यामात्मांशजगदेकता ॥**
**उक्ता देहत्रयातीत आत्मा साक्षी धियेष्यते ॥ १० ॥**

ननु द्वासुपर्णेति श्रुत्या तयोरन्यः पिप्पलं स्वाद्वत्ति इति कर्मफलभोक्ता जीवोऽभ्युपगतः। अनश्नन्नन्योऽभिचाकशीतीति साक्षिभूत ईश्वरो निर्दिष्टः। जीवस्य भोक्तृत्वे नित्ये, भोगोपकरणानामपि जीववन्नित्यत्वात्कथं स्वात्मन एकत्वेन दर्शनमुपपद्यते इत्यत आह—आत्मा, परं ब्रह्म, अंशाः, जीवाः। "ममैवांशो जीवलोके जीवभूतःसनातनः" इति स्मरणात्। 'अंशो नानाव्यपदेशात्' (२।३।४३) इति न्यायाच्च।

जगत्, चराचरं विश्वं भोग्यम्, एषां त्रयाणामपि एकताऽभेद इति भोक्त्रापत्त्यधिकरणेन (२।१।१३) आरम्भणाधिकरणेन च (२।१।१४) उक्ता, प्रतिपादिता। अत्र तावद्भोक्त्रापत्त्यधिकरणमारचयति भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्" (मा०) अद्वैतं बाध्यते नो वा- भोक्तृभोग्यादिभेदतः। प्रत्यक्षादिप्रमासिद्धो भेदोऽसावन्यबाधकः ॥१॥ तरङ्गफेनभेदेऽपि समुद्रेऽभेद इष्यते। भोक्तृभोग्यविभेदेऽपि ब्रह्माद्वैतं तथास्तु तत् ॥२॥" इति। आरम्भणाधिकरणमारचयति "तदनन्यत्व- मारम्भणशब्दादिभ्यः"। भेदाभेदौ तात्विकौ स्तो यदि वा व्याव- हारिकौ। समुद्रादाविव तयोर्बाधाभावेन तात्त्विकौ ॥ १ ॥ बाधितौ श्रुतियुक्तिभ्यां तावेतौ व्यावहारिकौ। कार्यस्य कारणाभेदादद्वैतं ब्रह्म तात्त्विकम् ॥२॥" इति। यथा वातावेशेनोद्भूततरङ्गफेनतः समुद्रे भेदो नास्ति तथा मायोपाध्युत्थितभोक्तृभोग्यविभेदेऽपि ब्रह्माद्वैतमेवेति प्रथमाधिकरणभावः ॥ १ ॥ "सर्वं यदयमात्मा" "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतिभ्यः कार्यकारण- योरभेदात् ब्रह्माद्वैतं तात्त्विकमेवेति द्वितीयसूत्रभावः ॥ २ ॥

स आत्मा क्वेति चेत्स्थूलसूक्ष्मकारणाख्यदेहत्रयमतीतः ततो अतिरिक्तः। अस्य प्रकरणत्वात् देहत्रयादिकमाकरादवगन्तव्यम्। तथाप्यत्र संक्षेपतः उच्यते। ईश्वरेक्षणवशात् त्रिगुणाव्याकृतादेकोत्तर- शब्दादिगुणयुक्तान्याकाशादिसूक्ष्मभूतान्यजायन्त। ततस्तेषां पृथक् पृथक् सत्वांशाच्छ्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यज्ञानेन्द्रियाणि, तत्सत्वां- शैक्यान्मनोबुध्यहङ्कारचित्ताख्यं वृत्तिभेदेन चतुर्विधमन्तःकरणं चाभूत्। पृथक्पृथक् आकाशादिरजोंशतो वाक्पाणिपादपायूपस्थाख्यपंचकर्मे- न्द्रियाणि, रजोंशैक्यात्प्राणादिपंचवृत्तिमान् प्राणोऽभूदेवं पञ्चज्ञानेन्द्रियैः पञ्चकर्मेन्द्रियैः पञ्चप्राणैरन्तःकरणैश्च सहितं सूक्ष्मभूतावृतं लिङ्गाख्यं सूक्ष्मशरीरमभूत्। अत्र प्राणकर्मेन्द्रियैः प्राणमयकोशः १. ज्ञानेन्द्रियबहि-

रवस्थमनोभिर्मनोमयः २. ज्ञानेन्द्रियान्तरवस्थधीभिर्विज्ञानमयः ३. इति कोशत्रयं, स्वप्नावस्थाभिमानी तैजसः। पञ्चीकृतपञ्चमहाभूतेभ्यः षाट्कौशिकं सप्तधातुवृतं स्थूलं शरीरम्। अयमन्नमयकोशः। अत्र जाग्रदवस्था, तदभिमानी विश्वः। एते कार्यभूते शरीरे। कारणशरीरं तु अनिर्वाच्यमज्ञानम्, तत्र निद्रावस्था, तत्र मलिनसत्त्वं, प्रियमोद-प्रमोदवृत्तिभिरेवानन्दमयकोशः। अत्र अभिमानी प्राज्ञः, एष व्यष्टि प्रपञ्चः। सर्वशरीराण्येकीभूय विराट्देहः समष्टिः, तदभिमानी वैश्वानरः। एवं समष्टिलिङ्गशरीराख्यः सूत्रात्मा, समष्टिसूक्ष्मशरीरं, तदभिमानी हिरण्यगर्भः। एवं कारणशरीरसमष्टिरव्याकृतं, तदभिमानी ईश्वरोऽन्तर्यामीत्यादि ज्ञेयम्। तद्देहत्रयातीत आत्मा। आत्मशब्दार्थः महर्षिभिरेवं स्मर्यते। "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तेन चात्मेति गीयते" इति। द्विविधो ह्यात्मा, व्यवहारविशिष्टः, केवलश्च। जाग्रदाद्यवस्थाभेदैः व्यवहारस्त्रिधा। तत्र देवतानुगृहीतेन्द्रियैर्जागरे विषयानत्तीत्यात्मेत्येकं निर्वचनम्। मनसीन्द्रियवृत्तिलये स्वप्ने जागरितपदार्थवासनाः आदत्त इति आत्मेति द्वितीयं निर्वचनम्। कारणात्मना बुद्धौ स्थितायां सर्वज्ञानोपसंहाररूपसुषुप्तौ सुखरूपं ब्रह्माप्नोतीत्यात्मेति तृतीयं निर्वचनम्। तथा च कैवल्योपनिषद्याम्नायते।'स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति' (१।१२) "स्वप्ने स जीवः सुखदुःखभोक्ता स मायया कल्पितजीवलोके। सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति (१३) पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः। पुरत्रये क्रीडति यश्च जीवस्ततः सुजातं सकलं विचित्रम्"इति(१४)। अतति,सातत्येन गच्छतीत्यात्मेति चतुर्थं निर्वचनं केवलस्य। यद्यवयवार्थो वा,रूढितो वाप्यात्मशब्दः अखण्डैकरसरूप एव, स्रग्भुजंगवत् कल्पितावस्थोपाधिमत्वं न तात्त्विकम्। विवेकेनोपाधिविलयेऽद्वैतमेवात्मतत्त्वं पारमार्थिकं। ईदृगात्मा

साक्षी, देहत्रयतदभिमानितद्व्यापारांश्च साक्षादव्यवधानेन द्रष्टा। "त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्। तेभ्यो विलक्षणः साक्षी" इत्युक्तेः। स कथं ज्ञेयः इत्यत आह-धिया निश्चयात्मिकान्तः-करणवृत्त्या, ईक्ष्यते, जिज्ञासुभिरिति शेषः ॥ १० ॥

उपक्रमादिषड्लिङ्गैर्यत्तात्पर्यावधारणम्।
अद्वैते श्रवणं तत्तत्संस्कृता धीस्तदीक्षणे ॥ ११ ॥

ननु 'न तत्र चक्षुर्गच्छति०' 'यन्मनसा न मनुते०' 'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा' इत्यादिश्रुतिभिस्तस्येन्द्रियान्तःकरणा-विषयत्वं प्रत्यपादि, तस्यादृश्यत्वात्, कथमुच्यते धियेक्ष्यत इति चेत्, अ-संस्कृतबुद्ध्यविषयत्वेऽपि, आत्मनः संस्कृतबुद्धिगोचरत्वमित्याभिप्रेत्याह- 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इत्युक्तोपक्रमादिषड्विधलिङ्गैः, अद्वैते, प्रत्यगभिन्ने ब्रह्मणि, यत्तात्पर्येणावधारणं, तच्छ्रवणमित्युच्यते। तेन, तादृशश्रवणेन, श्रद्धया गुरुप्रसादोपलब्धेन, संस्कृता, तत्संस्कृता, धीः, शास्त्राचार्यो-पदेशसंस्कृता बुद्धिः, श्रवणानुसारिमनननिदिध्यासनसंस्कारेण सूक्ष्मतां प्राप्ता; तदीक्षणे, तस्य प्रत्यगभिन्नपरमात्मनः ईक्षणेऽपरोक्ष-साक्षात्कारे विषये, समर्थेति शेषः। तथा श्रुतिः 'मनसैवानुद्रष्टव्यं' 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति। एवं च सति न चात्र परस्परं श्रुति-विरोधः ॥ ११ ॥

प्रत्युक्तात्र फलव्याप्तिर्वृत्तिव्याप्तिरपेक्षिता
ततो धिया कृते वाक्यविचारे स्वात्मदृग्भवेत् ॥ १२ ॥

भवतु नामैवं श्रुत्यविरोधोऽथापि आत्मा दृग्रूप एव, स च नैव कस्यापि दृश्यः, स संस्कृतधियापि दृश्यते चेत्पूर्वोक्तदोषस्तदवस्थ एवेति चेत्तत्राह 'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः' 'यन्मनसा न

मनुते०' 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा' इत्यत्र फलव्याप्तिः प्रत्युक्ता, स्वयंप्रकाशात्मनोऽविषयत्वात्। 'मनसैवानुद्रष्टव्यं०' 'दृश्यते त्वग्र्यया बुद्ध्या०' इत्यादौ वृत्तिव्याप्तिरपेक्षिता। यथा जडदृश्यघटादिदर्शने अज्ञाननाशनघटादिस्फुरणार्थं बुद्धितत्प्रतिबिम्बितचिदाभासयोरपेक्षा इयं फलव्याप्तिः। तथा, दीपदर्शने दीपान्तरानपेक्षणवत् स्वयंप्रकाशात्मदर्शने चिदाभासानपेक्षा, किं तु स्वस्य मुखसौन्दर्यवीक्षणे स्वच्छदर्पणापेक्षणवत् कल्पितानिर्वचनीयात्माज्ञाननाशार्थं वृत्तिव्याप्त्यपेक्षैव तथा चाभियुक्तोक्तिः 'बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम्। तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥१॥ ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता। स्वयं स्फुरणरूपत्वादाभासो नोपयुज्यते ॥ २ ॥ चक्षुर्दीपावपेक्ष्येते घटादेर्दर्शने यथा। न दीपदर्शने०' इत्यादिः। आभासो नोपयुज्यत इत्यनेनेदं सूचितं, तादृशवृत्तिप्रतिबिम्बितोऽप्याभासः स्फुरन्मध्यान्हसूर्यमण्डलाधःस्थापितदीप इव फलातिशयं न करोति। अतः पूर्वोक्तदोषानवकाशः। यस्मादेवं वृत्तिव्याप्त्यात्मा दृश्यते, ततस्तस्माद्धिया, संस्कृतया सात्विक्या बुद्ध्या, तत्त्वमस्यादिवाक्यविचारे कृते सति, स्वरूपभूत आत्मा स्वात्मा, तस्य दृक् दर्शनं ज्ञानं वा भवेत्। यद्वा, स्वरूपभूत आत्मैव दृक् ज्ञाता भवेत्। 'दृक् ज्ञाने ज्ञातरि त्रिषु' इत्यभिधानात्। सूक्ष्मवस्तुज्ञानार्थं उपाधिभूतकाचमयोपनेत्रवदुपाधिभूतया संस्कृतधिया स्वयं स्वात्मरूपद्रष्टा भवेदित्यर्थः ॥ १२ ॥

श्रुत्या युक्त्याप्यपास्यात्र तु सदसदसत्सन्मतं दुष्टमुक्तं
मिथ्या कार्यं विवर्ताभ्युपगमत इदं जन्मनाशश्रुतेश्च ॥
प्राणाद्यस्यापि चेष्टा गुणफणिगतिवत् स्यादभेदोक्तिरैक्य-
ज्ञप्त्यै सम्बन्ध आध्यासिक इह तदपास्त्यै श्रुता
वाक्यचिन्ता ॥ १३ ॥

ननु उपक्रमादिलिङ्गैस्तात्पर्यावधारणं दुर्घटं, सदसत्सदसत्पक्षैर्विरुद्ध-त्वादित्यत आह– इतः परं षोडश स्रग्धरावृत्तानि। सदसदिति दिगम्बरमतम्। असदिति वैशेषिकमतम्। सदिति साङ्ख्यमतम्। परस्परविरुद्धत्वाद् दुष्टमेतन्मतत्रयं, श्रुत्या, युक्त्यापि निरस्य जगद्रूपं कार्यं मिथ्येत्युक्तं पूर्वाचार्यैरिति शेषः।

तार्किकमते सृष्टेः प्रागसतः कार्यस्य सृष्टिकाले जन्म चेत् तत्खपुष्पवत्। तर्हि सांख्यमतानुसारेणोत्पत्तेः प्राक्सतः कार्यस्य सृष्टिकाले जन्म चेत्तत्कार्यमात्मवदेव किं न स्यात्। यदि प्रकृतौ निर्विशेषतया स्थितस्योत्पत्तिसमये सविशेषता जायत इति ब्रुषे चेत्तर्हि येन गुणेन प्रकृतौ कार्यं स्थितं स गुणः प्रकृतौ विद्यते वा न वा, विद्यते चेत्तर्ह्यधुना विशेषयुक्तमिति वदतो व्याघातः। न विद्यते चेदपसिद्धान्तः। असदुत्पत्त्यङ्गीकारापत्तेः। उत्पन्नस्याप्यवश्यं विनाशित्वात् असत्कार्यत्वाभ्युपगमापत्तेश्च काणादमतावेशप्रसंगः। असतो जन्म, सतो नाशश्चेत्युभयमपि युक्तिविरुद्धं शास्त्र विरुद्धं च। 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति स्मरणात्। तर्हि सदसदात्मकं कार्यमजनि ति चेत्सदसदात्मकवस्तुनोऽप्रसिद्धत्वात्कारणं विना कार्योत्पत्तेरसंभवात्सोपि पक्षो दुर्घटः। श्रुतिषु सर्वत्र 'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिना भ्रमाधिष्ठानत्वेन सद्वस्त्वभ्युपगम्य विवर्तन्यायेन सृष्टेरुक्तत्वात्।

श्रुत्या, युक्त्यापि, दुष्टं मतत्रयं निरस्य, दुष्टत्वेन प्रत्याख्याय। अधिष्ठानविषमसत्ताककार्यापत्तिर्विवर्त इत्युक्तलक्षणस्य विवर्तवादस्याभ्युपगमतोऽङ्गीकारेण, सार्वविभक्तिकस्तसिः। इदं, प्राणादि कार्यं जगत्, मिथ्या। न केवलमेतावतास्य मिथ्यात्वमुच्यते अपि तु जन्मनाशश्रुतेश्चापि मिथ्या भवितुमर्हति। 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इतिन्यायात्। 'यतो वा इमानि भूतानि जायन्ते' 'स प्राणमसृजत' 'एतस्माज्जायते प्राणो मनः सर्वे-

न्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इत्याद्याः जन्मप्रतिपादिकाः श्रुतयः। 'यत्प्रयन्त्यभिसंविशन्ति' 'यस्मिंश्च प्रलयं०, 'जगत्प्रतिष्ठा देवर्षे पृथि०' इत्याद्याः श्रुतिस्मृतयश्च लयप्रतिपादिकाः। तस्मादन्तरा एव इदं शुक्तिरजतवद् दृष्टिसृष्टं भवितुमर्हति। नन्वत्र विषमो दृष्टान्तः, शुक्तिरजतस्य व्यवहारासंभवात्। प्राणादिप्रपञ्चस्य तु चेष्टाव्यवहारादिदर्शनादिति चेत्तत्राह अस्य प्राणादिजगतः चेष्टा व्यवहारादिरपि, गुणफणिगतिवत्। यथा गुणे, रज्जौ, आरोपितस्य, फणिनः, सर्पस्य, मिथ्यात्वे सिद्धे, तद्गत्यादिभामस्यापि सुतरां मिथ्यात्वमर्थात् सिद्धमेव। एवं गुणफणिगतिवत् आत्मन्यध्यारोपित मिथ्याभूत-प्राणादेश्चेष्टापि मिथ्यैव। 'न हि सत्यतयाभीष्टं रज्जुसर्पविसर्पणम्' इत्यभियुक्तोक्तेः। प्राणादि सर्वं मिथ्याभूतं चेत् 'सर्वं यदयमात्मा' इत्यादिश्रुतिरसता तेन सद्रूपब्रह्मण एकत्वं कथं प्रतिपादयतीति चेत् ,कार्यकारणयोरभेदबोधेन ऐक्यज्ञप्त्यै, एकत्वज्ञानाय साऽभेदोक्तिः कार्यस्य मिथ्यात्वात्। तथा चायं प्रयोगः। प्राणादि, मिथ्या भवितुमर्हति, ब्रह्मकार्यत्वात्। मृत्कार्यघटादिवत् 'यथा सौम्यैकेन मृ०मृत्तिकेत्येव सत्यं' इति श्रुतेः। यथा मृदनुस्यूतं घटादि, मृत्कार्यं, तथा सदनुस्यूतं प्राणादिकं सद्ब्रह्मकार्यम्। प्राणः सन् , मनः सत् ,पृथ्वी सतीत्यादिना सत्त्वेन प्रतीयमानत्वात्प्राणादिकं विवर्तं सद्ब्रह्मकार्यमेवातोऽभेदोक्तिरेकत्वबोधायैव। तर्हि ममायं प्राणः, ममेदं मनो, ममेदं शरीरं, इति सम्बन्धेनास्य कथं व्यवहार इति चेत्। आत्मनोऽवयवावयव्यादिष्वपरिगणनात्समवायसम्बन्धो नास्ति। 'गुणानामाश्रयो द्रव्यं' इति तार्किकैर्लक्षितत्वान्निर्गुणस्यात्मनो द्रव्यत्वानङ्गीकारात्। भेरीदण्डयोरिव संयोगसम्बन्धो न घटते। परिशेषादसङ्गस्यात्मनोऽहंबुद्धिसिद्धोऽयमाध्यासिकसम्बन्ध एव। अध्यासो नाम 'अतस्मिंस्तद्बुद्धिः' इत्याचार्योक्तेः। स्थाणौ पुरुषवत् देहप्राणादौ ममाहमिति तादात्म्याध्यासोऽध्यासभाष्ये

प्रपञ्चितः। तर्हि मिथ्याभूतस्य तस्याध्यासिकसम्बन्धस्य कथं निवृत्तिरिति-चेत्तत्राह इह, अद्वैतशास्त्रे, तदपास्त्यै,तस्य, अन्योन्याध्याससम्बन्धस्य, अपास्त्यै, निवृत्त्यै, तत्त्वमस्यादिवाक्यचिन्ता, ध्यानं, विचार इति यावत्। श्रुता, श्रुत्या प्रतिपादिता॥ १३॥

शिष्यः शास्त्रानुशिष्टस्त्वमसि न जडदृश्याङ्गगोप्राणहृद्धी-
तत्सङ्घात्मा न दुःखादि तव हृदयजं नासि संसार्यतस्त्वम्।
प्रत्यग्बोधात्मनित्याद्वयचिदिति सकृद्बोधितोऽपीशभक्तो
वेत्त्यन्तर्दृष्टिस्तथैव प्रमितिजनकवाक्याद्विपर्यासहापी ॥१४॥

ननु वाक्यविचारस्य पुरुषार्थहेतुत्वमनुपपन्नम्। महता प्रयत्नेनाहर्निशं वाक्यार्थमसकृच्छ्रुतवतामपि जन्ममरणलक्षणानर्थहेत्वज्ञाननिवृत्तेरदर्शनादिति चेत्। पापाच्छन्नमतीनां कुतार्किकाणामेवैतत्, न तु शुद्धानामीश्वरभक्तानामन्तर्दृष्टीनाम्। तेषां क्षीणपापत्वात्सकृच्छ्रवणादप्यनुभवपर्यन्तं ज्ञानोत्पत्तिर्भविष्यति, यस्मादधिकारिणः प्रमितिजनको वाक्यविचार इत्यभिप्रेत्याह—शास्त्रेण, तत्त्वमस्यादिवेदलक्षणेनानुशिष्टः। यद्वा शास्त्रा, हितोपदेष्ट्रा गुरुणानुशिष्टः। शिष्यः, शासनार्हो मुमुक्षुः। सकृद्बोधितोऽपि तथैव वेत्ति। अनुशासनमाह—हे वत्स! त्वं, जडदृश्याङ्गगोप्राणहृद्धीतत्सङ्घो,नासि, न भवसि। अङ्गान्यवयवाः सन्त्यस्येति अङ्गं,अर्शआदित्वान्मत्वर्थीयोऽच्। अङ्गं स्थूलशरीरं, अन्नमयकोशः, त्वं नाङ्गं, अङ्गं च त्वं न भवसि इति व्यतिहारेणान्योन्याध्यासापनयार्थमनुशासनं, एवमन्यत्रापि। गावः, विषयान् प्रति गच्छन्तीति गावः इन्द्रियाणि। प्राणा, असवः, हृन्मनः, चित्तस्याप्यत्रान्तर्भावः। धीर्बुद्धिः, अहङ्कारस्याप्यत्रान्तर्भावः। जडा, अचेतनाश्च ता दृश्या, दृग्विषयाश्च ता अङ्गगोप्राणहृद्धियश्च, तासां सङ्घः, सङ्घातश्च, तदात्मको न भवसि। अङ्गादि प्रत्येकं त्वं न, तत्सङ्घातोऽपि

नासीति भावः। अङ्गादिः, आत्मा न भवति, जडत्वात्, घटवत् इत्यनुमानम्। अत एवानात्मधर्मभूतं दुःखादि तव न। यतस्त-द्दुःखादि हृदयाज्जातं अतस्तन्मनस एव। आदिशब्दात्कामादयो ग्राह्याः ‘कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरेतत्सर्वं मनः’ इति श्रुतेः। यतस्त्वं अनात्मधर्मभाङ्नासि अतः कारणात्त्वं संसारी नासि, न भवसि। तर्हि किंरूपोऽहमित्यत आह–हे वत्स! यत एवमतस्त्वं प्रत्यग्बोधात्मनित्याद्वयाचिदसि। असज्जडदुःखरूपाहङ्कार-धीमनःप्राणेन्द्रियदेहादेः प्रातिकूल्येन सच्चिदानन्दरूपेण अञ्चति प्रकाशत,इति प्रत्यक्, स चासौ बोधरूपात्मा च, स एव नित्याद्वयचि-चैतन्यं च त्वमसि इति। इह तत्त्वम्पदलक्ष्यार्थोऽखण्डैकरसत्वेनोक्तः। इत्येवं प्रकारेण सकृत् बोधितोऽपि, एकवारमनुशिष्टोऽपि। ईशभक्तः, ईश्वरानुरक्तिमान्। पुनश्चान्तः, स्वरूप एव, दृग् दृष्टिर्यस्य, सोऽनुशिष्टः शिष्यः। प्रमितिजनकवाक्यात्, प्रमाणजनकवाक्येन। तथैव, अखण्डै-करसत्वेनैव। प्रत्यगभिन्नाद्वयचैतन्यरूपोसीति सकृद्बोधितोऽपि वेत्ति। ततो विपर्यासहापी भवति। अनात्मभूतदेहादौ आत्मबुद्धिर्विपर्यासः। अन्तर्दृक् इत्यनेन पराग्दृशो नात्मदर्शनं इति सूचितम्। श्रुतिश्च ‘पराञ्चि खानि व्यतृणत्स्व० कश्चि०’ ‘पराच० पाशं’ (क० व० २।१।२) इति। स्मृतिश्च ‘इन्द्रियाणां हि चरतां०’ ‘तस्याद्यस्य० ष्ठितेति’॥ १४॥

सद्यो बोधो भवेच्चेत्प्रमितिजनकसद्वाक्यतोऽनेकवारं
पप्रच्छ श्वेतकेतुः कुत इतरऋषिः पञ्चवारं पुनश्च।
शङ्कैवं मास्तु बुद्धेः प्रबलतर इवाग्नेः प्रबन्धोऽत्र शश्वत्
श्रुत्योक्तं तद्विनष्टयै श्रवणमपि महारुन्धतानीतिबोधः॥१५॥

ननु सकृद्बोधितः आत्मानं प्रत्यगभिन्नं वेत्ति चेत् 'आवृत्तिरसकृदुपदेशात्' (४।१।१) इति शास्त्रं कुत एवं शास्तीतिचेत्तत्राह— प्रामितिजनकं, प्रमोत्पादकं यत्, सतः, निर्बाधस्य वेदस्य, वाक्यं तत्त्वमसीत्यादिकं, तस्मात्, सद्यः, श्रवणावच्छिन्नकालेन, बोधोऽपरोक्षसाक्षात्कारो, भवेत् चेत्, तर्हि श्वेतकेतुरारुणेयः, स्वपितरं प्रति, अनेकवारं, नववारं, कुतः पप्रच्छ 'भूय एव मा भगवान् विज्ञापयतु' इति। इतरऋषिः, भृगुः वारुणिः, 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म' इति पित्रैकवारमुपदिष्टोपि, पुनः पुनः पञ्चवारं, कुतः पप्रच्छेत्यनुकर्षः। एवमाक्षिप्य समाधत्ते— भो वत्स ! एवं प्रकारेण, ते शङ्का मास्तु। अत्रात्मसाक्षात्कारे, पापवशात् बुद्धेः प्रबलतरः प्रबन्धः, वर्तमानादिलक्षणः ज्ञानप्रतिबन्धः, भरतवामदेवादेरिव जन्मान्तरादिप्रापकः विद्यते। अग्नेरिव, यथा सर्वस्यापि दाहकस्याग्नेर्मणिमन्त्रौषधप्रयुक्तः स्तम्भनरूपः प्रतिबन्धो यावद्वर्तते तावत्सः प्रबलतरप्रबन्धो दहनशक्तिं स्तम्भयति, तदपायेऽग्निः क्षणात्सर्वं दहति; तथैवात्र यावद्बुद्धेः प्रबलतरप्रबन्धस्तावत्सकृच्छ्रवणान्न बोधाविर्भावो भवेत्, तदपनयार्थं शश्वच्छ्रवणमित्याह—तद्विनष्ट्यै, प्रबलतरपापरूपप्रतिबन्धविनाशाय। श्रुत्या शश्वच्छ्रवणमुक्तम्। न चैकवारश्रवणेन न बोधश्चेत् शश्वच्छ्रवणेनापि तथैवेति मन्तव्यं। यथैकवारमवहननेनावितुषाणां तण्डुलानामनेकवारमवहननेन वितुषत्वं लोकदृष्टम्। तथैव इह पुनः पुनः श्रवणेनाशेषदोषापायेऽपरोक्षसाक्षात्कारो भविष्यति; इदं दृष्टफलं न तु स्वर्गादिवददृष्टम्। एतेन न्यायेन श्वेतकेतोर्नववारं प्रश्न उपपद्यते। 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यं न विद्युः' इति श्रुतेः। भृगोरपि महारुन्धतीनीतिबोधः। यथोद्वाहे नवोढायै अरुन्धती प्रदर्शनीया। सा चातिसूक्ष्मतरा तारा झटिति न ज्ञायते, तद्दर्शनार्थं उपस्थितामन्यां स्थूलां तारां अरुन्धतीत्वेन गृहीत्वा, ततस्तां विहायारुन्धतीं मुख्यां प्रदर्शयन्ति; तद्वदिहाप्यात्मत्वेन अन्नमयाद्युपदेशद्वाराऽयमात्मोपदेशः पित्रा

वरुणेन भृगवे पञ्चवारं कृतः । महारुन्धतीनीतिबोधः, स्थूलारुन्धतीन्यायेन बोधः, उक्त इति शेषः ॥ १५ ॥

**नष्टेऽज्ञाने सकार्ये निरतिशयमुदाविर्भवेत्सत्परत्वात्**
**वाक्यं तस्मात्पुमर्थे श्रुतिशिरउदितं पर्यवस्यत्यवश्यम् ।**
**एवं नोचेदहंधीभवभवमृतिदुःखादिरूपः कदाचित्**
**संसारो दुर्निवार्यस्तत इह पुरुषार्थैकसत्साधनं तत् ॥१६॥**

एवं परमपुरुषार्थे वाक्यार्थबोधपर्यवसानमिति अन्वयव्यतिरेकाभ्यामाह-आवरणविक्षेपाख्यकार्यसहिते ज्ञानैकदाह्ये अज्ञाने, मूलाज्ञानाख्यसंसारनिदाने, नष्टे सति, तत्त्वज्ञानेन बाधिते सति । निरतिशयमुत्, मनुष्यानन्दमारभ्याप्रजापतिलोकं उत्तरोत्तरं शतशतगुणिता आनन्दाः सातिशयाः सोपाधिकाश्च अत एव तेऽनित्याः । तद्विलक्षणा निरतिशया, उपलक्षणान्निरुपाधिका नित्या च मुत्, आनन्दः, आविर्भवेत्, स्वर्णे विद्यमानो वर्णः आगन्तुकेन मलेनावृतोऽपि अग्नितापेन नश्यति ततः स्वरूपभूतो वर्णो यथाविर्भवति तद्वत् ज्ञानाग्निनाऽज्ञानरूपमले नष्टे पूर्वविद्यमानैव स्वरूपभूता निरतिशयमुत् आविर्भवेत् । 'संपद्याविर्भावः स्वेन शब्दात्' इति न्यायात् (४।४।१) । यस्मादेवं तस्मात्, सत्परत्वात्, सद्ब्रह्म कालत्रयाबाधं, तत्परत्वात्, ब्रह्मैकसमनुगतत्वात् । श्रुतिशिरउदितं, उपनिषदुक्तं, तत्त्वमस्यादिवाक्यं । पुमर्थे, मोक्षाख्ये परमपुरुषार्थे, अवश्यं पर्यवस्यति, नात्र विगानमिति भावः । एवं प्रकारेण, परमपुरुषार्थे वाक्यं नो पर्यवस्यति चेत् अनात्मनि देहादौ याऽहंधीरध्यासोत्पन्नाऽहंमतिः, तस्याः सकाशात् भवो जन्म यासां तानि, भवः, उद्भवश्च, मृतिर्मरणं च, दुःखं पीडा चेति द्वन्द्वः, तानि आदीनि येषां शोकादीनां, तानि रूपं यस्य ईदृशः संसारः, सुरासुरनरवानरपशुपक्षिकृमिकीटविट-

पिमुखानेकयोनिसंसरणरूपः । दुःखेनापि, प्राणावशेषितेनापि महाकष्टेन, निवारयितुमशक्यः, अनन्यनिवार्यत्वात् । ततः शास्त्रानर्थक्य प्रसङ्गोऽप्यापतेत् । यस्मादेवं, ततः, इह, अधिकारिलोके । तत्, अवान्तर वाक्यैः सह वर्तमानं तत्त्वमस्यादिवाक्यं, पुरुषार्थैकसत्साधनं, पुरुषार्थस्य, निःश्रेयसस्य, एकं, मुख्यं, सत्, इतरप्रमाणाबाधितं, साधनं अस्तीतिशेषः । 'शास्त्रयोनित्वात्' (१।१।३) इति न्यायाधिकरणात् (मा०) 'अस्त्यन्यमेयताप्यस्य किंवा वेदैकमेयता । घटवत् सिद्धवस्तुत्वाद्ब्रह्मान्येनापि मीयते ॥ १ ॥ रूपलिङ्गादिराहित्यान्नास्य मान्तरयोग्यता तं त्वौपनिषदेत्यादौ प्रोक्ता वेदैकगम्यता ॥ २ ॥' इति ॥ १६ ॥

**धीर्व्याप्ताङ्गा यदा गा नयति निजनिजार्थान्स्मृता जागृतिस्तद्द्रष्टाऽसङ्गोसि गोवृत्तिलय इह हृदि स्वप्न ईक्ष्या मतार्थाः । मायामात्रं हि दृक् त्वं सकलविदुपसंहार एषा सुषुप्तिर्बीजत्वेन व्यवस्थात्र परमसुखदृग्धीगुणज्ञोऽसि तुर्यः ॥१७॥**

एवं अव्यभिचारितया वाक्यस्य परमार्थपरत्वं प्रतिपाद्य, वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात्तावत्पदार्थं विवक्षुः, आदौ त्वंपदार्थशोधनमाह बोधसौकर्यार्थम्—यदा, यस्मिन काले, आकेशादानखाग्राच्च व्याप्तं, अङ्गं, देहो, यया सा व्याप्ताङ्गा, धीर्बुद्धिः । गा, इन्द्रियाणि, देवतानुगृहीतानि । निजनिजार्थान् प्रति, स्वस्वविषयान् प्रति; नयति, तदा सा जागृतिः स्मृता । 'लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा । इन्द्रियैरर्थविज्ञानं देवतानुग्रहान्वितैः ॥ स्वं स्वं च विषयज्ञानं तज्जागरितमुच्यते' इत्युक्तेः । हे वत्स ! तस्यावस्थाविशेषस्य द्रष्टा तद्द्रष्टा, असङ्गोऽसि । राजस्या बुद्धेरेव असौ अवस्था न तव तत्सङ्गोपि । श्रुतिः 'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' इति । इयं व्यभिचारिण्यवस्था, यतोऽवस्थान्तरेऽस्या, एतद्धर्मैतदाश्रयभूतदेहादेश्च अभानात् । एवमन्यत्राप्यतिदेशः । अत्र

देहादेरवस्थान्तरे व्यतिरेकेपि तत्साक्षिण आत्मनोऽन्वयः सर्वत्रेति बोध्यम्। तथा 'करणोपरमे जाग्रत्संस्कारोत्थं प्रबोधवत्। ग्राह्यग्राहक-रूपेण स्फुरणं स्वप्न उच्यते'। इत्युक्तलक्षणेऽवस्थाविशेषे, इह, शास्त्र-प्रसिद्धे, हृदि, मनसि, गोवृत्तिविलय, इन्द्रियवृत्तिविलयः, न त्विन्द्रिय-विलयः, स्वकारणे कार्यलयसंभवात्। 'एतस्माज्जायते प्राणो मनः सर्वे-न्द्रियाणि च' इति श्रुतेः आत्मन एव सर्वकारणत्वश्रवणात्। इह तु 'सर्वं परे देवे मनस्येकीभवति' इति श्रुतेः। ईदृशोऽवस्थाविशेषः स्वप्न इत्युच्यते। अत्र स्वप्ने दर्शनश्रवणमननादिना जागरे मता येऽर्था विषया रथरथिपथ्यादयः त एव कल्पितदृष्ट्यादिना वीक्ष्याः; यत्र कार्यज्योतिः सूर्यादि, करणज्योतिः नेत्रादिश्च नैव। अथापि पुरुष-ज्योतिषा मनःकल्पितेन्द्रियतद्विषयाश्च दृश्यन्ते। जागरे कार्यज्योतिषः करणज्योतिषश्च सत्वान्निद्रायां तदभावाच्च अत्रैव स्वयंज्योतिष्ट्वं ज्ञेयम्। श्रुतिश्च स्वप्नावस्थामुपक्रम्याह—'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इति। अत्र दृश्याः सर्वेपि पदार्थाः मायामात्रं हि, मृषाभूता एव, तत्कालं प्रतीतिमात्राः प्रातिभासिका एव; कालान्तरे द्रष्टुमशक्यत्वात्। 'न तत्र रथा' इत्यादिना श्रुत्यापि तथैव प्रतिपादितत्वात्। मायामात्रं त्विति सूत्रप्रतीकमपि सूचितं, तथा च पारमर्षं सूत्रम् 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' (३।२।३) इति। अत्र 'सन्ध्ये सृष्टिराह हि' (३-२ १) इति सर्वमधिकरणमनुसन्धेयम्। एवमन्यत्रापि। हीति-लोकप्रसिद्धिं द्योतयति। भो वत्स! त्वं तु, दृक्, स्वप्नद्रष्टासि, सात्विकधी-परिणामरूपस्वप्नावस्थासंबंधस्तव नास्तीति भावः। सकलविदुपसंहारः, सर्वप्रकारकज्ञानोपसंहारः, एषा सुषुप्तिरवस्थाविशेषः। अत्र बीजत्वेन व्यवस्था, बुद्धेरवस्थानं; तथा चोक्तं 'ज्ञानानामुपसंहारो बुद्धेः कार-णतास्थितिः। वटबीजे वटस्येव सुषुप्तिरभिधीयते' इति। 'अथैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीर एतत्सुखं भवति' इति

श्रुत्युक्तपरमसुखदृक् त्वमसि। यतः धियो बुद्धेस्त्रिगुणाया, गुणान्, रजःसत्वतमआख्यान्, जाग्रदाद्यवस्थाहेतुभूतान् जानातीति धीगुणज्ञः, ईदृशोऽसि। अतएव, विश्वतैजसप्राज्ञाख्यावस्थात्रयाभिमान्यपेक्षया त्वं तुर्यः, त्रित्वापेक्षया चतुर्थोऽसि॥ १७॥

**सापेक्षा तुर्यता ते त्र्यनृतपददृशोऽसत्त्रिधातूद्धृताङ्गं**
**मर्त्यं विश्वं तथेदं पटविलय इवाकर्षणाद्धेतुतन्तोः॥**
**हेतुद्रव्यापकर्षे जगदपि विकृतं नश्वरं श्रौतसत्त्रि-**
**रूपार्केन्द्वग्निधार्यं घटवदसदनाद्योऽसि स त्वं हि मृद्वत्॥१८॥**

ननु अवस्थात्रयस्य मायामयत्वेन यथाऽसत्यत्वं, तुरीयस्यापि तथात्वमिति चेत्तत्राह—हे वत्स! त्रीणि च तान्यनृतपदानि जाग्रदादीनि, तेषां दृशो द्रष्टुस्ते, तुर्यता साकांक्षा, यस्मात् त्रयापेक्षया तुरीयत्वं साकांक्षं तस्मात्तुरीयशब्दवाच्यमवस्थान्तरं वस्तु नास्ति। अग्रहणान्यथाग्रहणरहितस्य स्वयंप्रकाशचिद्घनस्य निर्विशेषस्यात्मनः तुरीयशब्देन श्रुत्योक्तत्वात्। श्रुतिश्च 'नान्तःप्रज्ञं० चतुर्थं मन्यन्ते स आत्मा' इति। अतो नास्यानृतत्वं त्र्यनृतपदवत्; तेषामनृतत्वं तु अनृतान्तःकरणगुणोत्पन्नत्वात्। कफपित्तवाताख्यत्रिधातूद्धृतं शरीरं; तेषां वैषम्ये नाशदर्शनाद्वैषम्याभावे स्वास्थ्यदर्शनाच्च। धातूद्धृताङ्गं, त्रिधातूद्धृतशरीरं, मर्त्यं, मरणधर्मकं, अतोऽसत्। सदिति धातुविशेषणं वा। यथेदं शरीरं मर्त्यं, तथेदं विश्वमपि मर्त्यं, नश्वरम्। तत्र युक्तिमाह यथा हेतुतन्तोर्हेतुभूततन्तोराकर्षणात्पृथक्करणात्पटाविलय इव, तन्तुनिर्मितपटनाश इव। हेतुद्रव्यापकर्षे सति, विकृतं, कार्यभूतं, जगदपि, नश्वरं भवेत्।

ननु तंत्वाकर्षणात्पटनाशो युक्तः, न तथा जगतः, पटतन्तुवत्तत्र कारणादर्शनात् इति चेत् तत्राह—श्रौतसत्त्रिरूपार्केन्द्वग्निधार्यं, श्रौतानि, 'यदग्ने

रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य० यच्चन्द्रमसो० यदादित्यस्य सत्यम्' इति श्रुतिप्रतिपादितानि सद्रूपाणि येषां, तैरर्केन्द्वग्निभिर्धार्यं जगत्। 'वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' इति शश्वच्छ्रुतिपठितज्ञापनाय सद्रूपेत्युक्तम् । यथा कफवातपित्तोध्दृतं शरीरं, तथा तत्स्थानीयाग्नीन्द्वर्कधृतं जगदिदं; अग्न्यादीनामन्यतमस्याभावे जगदन्धतमो भवेत् । ततो जगतः स्थितिरपि न स्यात् । कारणभूततन्तुपृथक्करणेन पटनाश इवाव्याकृतप्रकृतिरूपरोहितादिरूपपृथक्करणे कार्यभूताग्न्यादिनाशः । रूपत्रयसत्यत्वं तु आपेक्षिकं; जन्यत्वादपि प्रकृतेः कालान्तरेण नाशाभ्युपगमात् । 'अजामेकां' इत्यत्रोक्तमजात्वं तु छागासदृशतया कल्पनामात्रमिति 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' (१।४।१०) इत्यनेन सूत्रितम् । अतो जगदिदं घटवदसत् । ननु अहमपि तत्प्रकृतिकत्वात्तथाविध इति चेत्तत्राह हि, निश्चयेन; सः, पूर्वोक्तस्त्वं, मृद्वत, घटकारणभूतमृत्तिकावदनाद्योऽसि, आद्यः, कारणं प्रकृतिरविद्यमाना यस्य सोऽनाद्यः, सर्वविकारशून्योऽसि । 'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः,' (२।३।१७) इत्यधिकरणन्यायात् । विमतं जगदसत्, कार्यत्वात्, घटवत् । आत्मा, सन्, कारणत्वान्मृद्वत् । 'जीवो ब्रम्हैव नाऽपरः' इति जीवस्यात्मत्वं, ततो 'न जायते म्रियते वा' इति निर्विकारत्वं ज्ञेयम् । कैवल्योपनिषद्यपि जीवब्रह्माभेदमभिप्रेत्योक्तम् 'मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितं । मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्' इति । तस्मादनाद्यन्तत्वात्सर्वविवर्तस्य त्वमेव प्रकृतिरसि ॥ १८ ॥

भास्याङ्गाद्भासकोऽन्योसि घटपटमुखाद्दीपवत्स्वप्रकाशो-
ऽन्यत्रेतं मे मनोऽद्य स्थिरमिति मतिभूर्वृत्तिवेत्ता त्वमन्यः ।
यत्सान्निध्याज्जडाङ्गाद्यजडवदवभात्येव स त्वं हृदादि-
र्यस्यायस्कान्तवच्च प्रचलति पुरतः स त्वमेवाविकारः ॥१९॥

इतःपरं टिप्पणी । क्वचिद्योग्यस्थले व्यासश्च । भास्येति । भास्याद्घटपटमुखादीपवत्, त्वं भास्यादङ्गाद्देहादन्यो भासकः, अतः स्वप्रकाशोऽसि । मे मनोऽन्यत्र इतं, गतं, अधुना स्थिरं वेति मतिभूवृत्तिवेत्तान्तःकरणजन्यवृत्तिवेत्ता त्वं, ततोऽन्योऽसि । यत्सान्निध्याज्जडं अङ्गादि, देहाद्यहङ्कारान्तं अजडवच्चेतनवदेवावभाति, सः त्वम् । यस्य तव पुरतः,अयस्कान्तवत् हृदादि प्रचलति, स त्वमेव, तथाविधक्रिययाप्यविकारोऽसि ॥ १९ ॥

शेषत्वेनाङ्गनाद्या दृश इह दयिता यस्य सोऽतिप्रियस्त्वं
भूयासं मा न भूवं त्वहमिति दृगतिप्रेमपात्रोऽसि स त्वम् ।
प्रज्ञातद्वृत्तिसाक्षी त्वमनिशमुदितः सच्चिदानन्दरूपः
साक्षित्वं बोद्धृता तेऽलमविकृतितयेत्थं त्वमर्थोऽवधार्यः॥२०॥

इह, दृशः, द्रष्टुः, यस्य, शेषत्वेनाङ्गनाद्या, भार्यापुत्रादयः, दयिताः, प्रियाः सन्ति, स त्वमतिप्रियोऽसि, शेषित्वात् । अतिप्रियत्वेनाहं मा न भूवं, किं तु भूयासं इति दृग्द्रष्टा,स त्वमतिप्रेमपात्रभूतोऽसि । प्रज्ञा, बुद्धिः, तद्वृत्तयश्च तत्साक्षी त्वमेव । अनिशमुदितः, नित्योदितः । सच्चिदानन्दरूपोऽसि । ते, तव, अलं, अत्यन्तं, अविकृतितया, निर्विकारत्वेन, साक्षित्वं बोद्धृत्वं च विद्धि । इत्थं त्वम्पदार्थोऽवधार्यः ॥२०॥

द्रष्टा यो नो गुणात्मा न खमपि पवनो नाग्निरापो न च क्ष्मा
प्राणो हृद्धीर्न चाक्षाण्युदितसकलसंबन्धहीनोऽक्षरोन्यः ॥
दृश्यात्कार्याज्जडाद्योऽगतिरनवयवोऽसंग एको विशुद्धो
बुद्धो नित्यो विमुक्तोऽद्वयऋषिवचसारूप्यसौ तत्पदार्थः॥२१॥

तत्पदार्थमाह त्रिभिः। यो द्रष्टा, परमात्मा, स गुणरूपः प्रकृतिरूपो वा नो भवति । खं नेति शून्यवादनिरासः, यद्वा आकाशाद्यक्षान्तं न

भवति, अक्षाणीन्द्रियाणि। उदितं, उक्तं, यत्सकलं, तत्संबन्धहीनश्च अतोऽक्षरोऽविनाशी। जडाद्, दृश्यात्कार्यात् खादेश्चान्योऽस्ति। यः मन-आदिना न गम्यते इत्यगतिः, अनवयवोऽतएवासंगः, एकः, सजातीयादिभेदरहितः, अद्वयः, क्षुत्पिपासादिद्वैतरहितः, अतएव विशुद्धादि रूपः ऋषिवचसा, 'अरूपवदेव हि तत्प्रधानत्वात्' (३।२।१४) इति व्यासोक्त्या, अरूपी अस्ति, एवं असौ वक्ष्यमाणश्च तत्पदार्थः ॥२१॥

योऽतव्द्याबृत्तिसाक्षाद्विधिमुखगदितोऽजोऽस्तसंसारदोषोऽ
तर्क्योऽस्थूलादिलक्ष्माऽस्तनिरतिशयमुद्योऽप्रकाश्यो गुणाश्च ।
अद्रेश्यत्वादयोस्याप्यगुण इतमलोऽचिन्त्यशक्तिर्निरीहोऽ
कर्ताऽभोक्ताऽनपूर्वोऽप्रकृतिरविकृतिःसच्चिदानन्दमूर्तिः॥२२॥

यः, नेति नेतीति निषेधेन, नित्यः शुद्ध इत्यादिना साक्षाद्विधिमुखेन च गदितः, उक्तः। अजः, जन्मादिशून्यः। अस्ताः, त्यक्ताः, संसारदोषा येन। अतर्क्यः, तर्कागम्यः, 'अणीयान्' 'ह्यतर्क्यम्' इति श्रुतेः। अस्थूलमनण्वादि लक्ष्म यस्य। अस्ता निरतिशयमुद्येनानन्दरूपत्वात्। मनआदेरप्रकाशः दृग्रूपत्वात्। अद्रेश्यमग्राह्यमित्यादयः यस्य गुणा अपि स्वयं अगुणः, प्राकृतगुणरहितः, 'अदृश्यत्वादिगुणक' इति न्यायात् (१।२।२१)। इतमलः, रागादिहीनः। अचिंत्या, सत्वासत्वाभ्यामनिर्वचनीया शक्तिर्यस्य। निरीहः, आप्तकामत्वात्, ततोऽकर्ताऽभोक्ता। 'तदेतत् ब्रह्मानपूर्वम्' इति श्रुतेरविद्यमानः पूर्वो हेतुर्यस्य। 'असंभवस्तु सत' इत्यधिकरणात् (२।३।९)। अत एवाप्रकृतिः, ततोऽविकृतिश्च, सच्चिदानन्दरूपः ॥२२॥

सर्वज्ञः सर्वशक्तिः सकलपतिरयं कार्यभूतः प्रपञ्चो
यस्यातोऽसावनन्तो यमयति य इहाविश्य जीवात्मनास्य ॥
ज्ञानात्सर्वज्ञता यः कृतफलदतयास्ते समो यत्नतो वि-
जिज्ञास्यं ब्रम्ह मुक्त्यै यदिति निगदितस्तत्पदार्थोऽयमेव॥२३॥

मायोपाधित्वात्सर्वज्ञः, सर्वशक्तिः, सकलपतिश्च। 'एष सर्वेश्वर' इति श्रुतेः। पत्याद्यधिकरणाच्च (१।३।४३)। यस्यायं दृश्यः कार्यभूतः प्रपंचोतोऽसौ अनन्तः। 'यः पृथिव्याम्' इति श्रुतेः। 'अन्तर उपपत्तेः' इति न्यायाच्च (१।२।१३) योऽन्तर्यामितया यमयति। यश्चेह सृष्टभूतेषु जीवात्मना विश्वं प्रविश्य स्थितः। 'येनाश्रुतꣳ श्रुतम्' इत्यादिश्रुतेःयस्य ज्ञानात्सर्वज्ञता स्यात्।'वैषम्यनैर्घृण्ये न' इति न्यायात् (२।१।१२) यः जीवकृतकर्मफलदत्वेन सम आस्ते। 'तद्विजिज्ञासस्व' इतिश्रुतेर्मुक्त्यै, यत्नतः, तपआदिना, यद्ब्रह्म जिज्ञास्यं, अयमुक्तः सर्वोऽपि तत्पदार्थ एव ॥ २३ ॥

**संसर्गो नापि नीलोत्पलमिव न विशिष्टोत्र वाक्यार्थ एतद्-**
**वैलक्षण्येन तूक्तो व्यभिचरति गुणोब्देपि निलाम्बुजे सन् ॥**
**तद्वद्द्रव्यं च रक्ते व्यभिचरति न सद् ब्रह्मता न प्रतीचोऽ-**
**न्यत्र प्रत्यक्त्वमेवं कथमपि हि परब्रह्मणोऽन्यत्र नास्ति ॥२४॥**

पदार्थमुक्त्वा वाक्यार्थमाह पञ्चभिः संसर्ग इति। अत्र वाक्ये संसर्गो न वाक्यार्थः। नापि नीलोत्पलमिव विशिष्टार्थः। एतदुभयवैलक्षण्येन तु वाक्यार्थ उक्तः। यतः नीलो गुणः नीलाम्बुजेऽपि सन्, विद्यमानोऽपि। अब्दे, मेघे, व्यभिचरति। तद्वत् द्रव्यं, गुणाश्रयं कमलं, रक्तेऽपि व्यभिचरति। सत्, निर्बाधं,क्वापि न व्यभिचरति। हि, यतः, प्रतीचः, आत्मनः, अन्यत्र ब्रह्मता नास्ति; एवं, प्रत्यक्त्वं कथमपि ब्रह्मणः सकाशात्, अन्यत्र नास्ति, न विद्यते ॥ २४ ॥

**वाक्यार्थोतोऽत्र तादात्म्यमुभयपदयोरर्थयोरस्त्यखण्डम्**
**प्रत्यग्बोधैकरूपोऽद्वयमुदपि च सोऽद्वैतमुद्रूप एव ॥**
**तादात्म्यज्ञप्तिदार्ढ्ये स्वयमपि हि तदर्थस्य पारोक्ष्यमाशु**
**व्यावर्तेताज्ञतान्यस्य च स च परिपूर्णप्रमोदोवतिष्ठेत् ॥२५॥**

अत एवात्राद्वैते, तत्त्वमाख्ययोरुभयपदयोरर्थयोः, अखण्डं, एकरसं तादात्म्यं, वाक्यार्थो भवति। यतः अद्वयमुत्, अद्वयानन्दः, तत्पदार्थः, प्रत्यग्बोधैकरूपस्त्वमर्थ एवास्ति। तथा सोपि, प्रत्यग्बोधोपि, अद्वैतमुत्, अद्वयानन्द एवास्ति। एवमन्योन्यं विशेष्यविशेषणीभावेन तादात्मज्ञप्तेर्ज्ञानस्य, दार्ढ्यें सति, स्वयमेव,. स्वत एव, तदर्थस्य, पारोक्ष्यं आशु व्यावर्तेत, तथाऽन्यस्य, त्वमर्थस्य, चाज्ञता, किंचिज्ज्ञत्वादि व्यावर्तेत। यद्येवं किंस्यात्तत्राह स च, त्वमर्थः शुद्धो जीवः परिपूर्णप्रमोदोवतिष्ठेत्॥ २५ ॥

सर्वज्ञत्वादिलक्ष्माऽभवदिह य उपाश्रित्य मां शुद्धसत्वाम्
विश्वोत्पत्तौ निमित्तं श्रित उत य उपादानकं तामसीं ताम्॥
तद्वाच्यार्थः स पारोक्ष्यशबल उत यद्ब्रम्ह सर्वत्र पूर्णम्
सत्यं ज्ञानं ह्यनन्तं तदिह ऋषिमतस्तत्पदार्थो हि लक्ष्यः॥२६॥

तत्पदस्य त्वंपदस्य च वाच्यार्थं लक्ष्यार्थं च विविच्याह द्वाभ्याम्। इह, विश्वोत्पत्तौ, य, आत्मा, शुद्धसत्वां मां, मायां, उपाश्रित्य, उपाधित्वेन स्वीकृत्य, सर्वज्ञत्वादिलक्षणो, निमित्तं, उत, अपि, यः तामसीं तां मायां श्रितः उपादानकं कारणं चाभवत्। स च उभयविधः,एकीभूय तत्पदवाच्यार्थोऽभवत् , स एव पारोक्ष्यशबल, उपाधिमिश्रितश्च। एवं तत्पदवाच्यार्थो ज्ञेयः। लक्ष्यार्थमाह,यद्धि सर्वत्र पूर्णं,सत्यं ज्ञानमनन्तं ब्रह्म, तदिह, हि, निश्चयेन, ऋषिमतः लक्ष्यः तत्पदार्थस्तत्पदलक्ष्यार्थः ॥ २६ ॥

यो हृत्संभिन्नबोधः परकलुषितसत्वामुपाध्यात्मना यो
रागद्वेषादिदुष्टां प्रकृतिमुपगतस्त्वंपदार्थः स वाच्यः॥
कूटस्थः प्रत्यगात्मा करणगुणपरः पंचकोशातिरिक्तो
जाग्रत्स्वप्नादिसाक्षी त्रितनुपर इहोक्तस्त्वमर्थो हि लक्ष्यः॥२७॥

यः, पराभ्यां, रजस्तमोभ्यां, कलुषितं, मलिनं, सत्वं, यस्याः तां मलिनसत्वां, अत एव रागद्वेषादिदुष्टां प्रकृतिं, उपाध्यात्मनोपाधित्वेनोपगतोऽत एव हृदान्तःकरणेन, संभिन्नः, परिच्छिन्नो बोधो यस्य स किंचिज्ज्ञ इत्यर्थः, स वाच्यस्त्वंपदार्थः, त्वंपदवाच्यार्थः। लक्ष्यार्थमाह। कूटोऽयोघनः, शैलशृंगं वा, तद्वन्निर्विकारत्वेन तिष्ठतीति कूटस्थः, करण गुणेभ्यः,विषयेभ्यः, यद्वा करणानीन्द्रियाण्यन्तःकरणं च,सत्वादिगुणाश्च तेभ्यः परोऽसंगः,कोशकारकृमेरिवात्मनः क्लेशहेतुत्वात् कोशाः, तेभ्यः आत्मनःपरिच्छिन्नत्वहेतुभ्यःअन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाख्यपंचकोशेभ्योतिरिक्तः, जाग्रत्स्वप्नसुषुप्त्यवस्थासाक्षी। त्रितनुभ्यः, स्थूलसूक्ष्मकारणदेहेभ्यः, परः, व्यतिरिक्तः, प्रत्यगात्मा इह लक्ष्यस्त्वंपदार्थः उक्तः, त्वंपदलक्ष्यार्थ इत्यर्थः, हि, शास्त्रप्रसिद्धमेतत् ॥ २७॥

**वैरं वाच्यार्थयोर्यद्यपि न भवति तल्लक्ष्ययोस्तत्त्वमोर्वा**
**ऐकात्म्यात्तद्विहाय स्मृतजहदजहल्लक्षणालक्षितार्थम्॥**
**लक्ष्यं शुद्धं गृहीत्वालमुभयपदयोः सच्चिदानन्दमेकम्**
**वृत्तिव्याप्त्येह लब्ध्वाऽस्मृतगलकनकप्राप्तिनीत्या कृती**
**स्यात् ॥ २८ ॥**

एवमत्र परस्परविरोधस्य का गतिरिति चेत् लक्षणया तत्परिहार, इत्याह। वैरमिति। यद्यपि वाच्यार्थयोर्वैरं, विरोधः। लक्ष्ययोरर्थयोस्तद्वैरं न भवति। तत्र हेतुः तत्त्वमोस्तत्त्वंपदार्थयोः, लक्ष्ययोरैकात्म्यात् वै, निश्चितम्। अतः तद्वैरं विहाय, वाच्यांशं परित्यज्य। स्मृता, स्मृत्युक्ता,या जहदजहल्लक्षणा तया लक्षितार्थं शुद्धमेकं अखण्डैकरसं उभयोः पदयोः लक्ष्यं गृहीत्वा, तमेवैकं सच्चिदानन्दं, अस्मृतगलकनक प्राप्तिनीत्या, विस्मृतकंठस्थसुवर्णभूषणप्राप्तिन्यायेन, इह, शुद्धान्तःकरणे, वृत्तिव्याप्त्या लब्ध्वा, कर्ता कृतकृत्यः स्यात्। यदुक्तमाचार्यैः—

'मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे। मुख्यार्थेनाविनाभूत प्रतीतिर्लक्षणोच्यते। तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा। सोयमित्यादिवाक्यस्थपदयोरिव नापरा.' इति। वृत्तिव्याप्त्येत्यत्राभियुक्तोक्तिः—'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता। स्वयंस्फुरणरूपत्वादाभासो नोपयुज्यते' इति। एवमखण्डैक्यं निर्बाधं, 'अतोऽनन्तेन तथा हि लिङ्गम्' (३।२।२६) इति सूत्रेण सूत्रितत्वात्। सेतून्मानसंबन्धभेदव्यपदेशपरिहारस्तु सेतून्मानाधिकरणे द्रष्टव्यः (३।२।३१) ॥ २८ ॥

विक्षेपकावृतिभवे विभवे विनष्टी
स्वानन्ददृष्टिरपहाय च दृष्ट्यदृष्टी
एकात्मनेह चरति स्वरतिः कृतार्थ
आत्मैव नात्मविदयं सदयं परार्थः ॥ २९ ॥

कृतकृत्यत्वं दर्शयति विक्षेपेति। इतः परं अष्टादश वसंततिलका वृत्तानि। विक्षेप एव विक्षेपकः, आवृतिरावरणं, ततो भवे, उत्पन्ने विविधाः भवाः, जन्मानि, याभ्यान्ते। विशेषा नष्टिः हानिर्याभ्यां ते। दृष्ट्यदृष्टी, दृष्टिशब्देन विक्षेपावृतिजौ जाग्रत्स्वप्नौ वाच्यौ। अदृष्टिशब्देनावरणजा निद्रोच्यते, ते अपहाय, गुणातीतो भूत्वेत्यर्थः। स्वानंदे, स्वरूपानन्दे एव, दृष्टिर्यस्य न तु बाह्यविषये। स्वस्मिन्नेव रतिर्यस्य न तु भार्यादौ, एवंभूत एकात्मना, केवलरूपेण, इह यश्चरति स कृतार्थः। 'एतद्बुध्वा बुद्धि० त' इति स्मृतेः। अयं नात्मवित् किन्तु आत्मैव। 'दर्शनादर्शने हित्वा स्वयं केवलरूपतः। यस्तिष्ठति स तु ब्रह्मन् ब्रह्मविद्ब्रह्म न स्वयं' इत्युक्तेः। अयं ज्ञानसमकालमुक्तोऽपि सदयं यथा तथा, परार्थः, परोपकारैकप्रयोजनः, जीवतीति शेषः ॥ २९ ॥

कुर्याच्छमादिसहितोऽवहितः श्रुतार्थ-
स्थेम्नेऽसकृच्छ्रवणपूर्वमदोऽकृतार्थः ॥
देहात्मवद्दृढपरात्मधियं रिरक्षुः
पूर्णो भविष्यति कृती परवित्तरक्षुः ॥ ३० ॥

यस्य प्रतिबन्धेनेदृशसाक्षात्कारो न, तेनावृत्तिरसकृदित्यधिकरण न्यायेन (४।१।१) श्रवणादि कार्यमित्याह। सकृच्छ्रुत्वाप्यकृतार्थश्चेच्छ्रुतार्थस्य स्थेम्ने, स्थैर्याय। देहात्मवत्, देहात्मज्ञानवत्, देहात्मज्ञान-बाधकां दृढपरात्मधियं, रिरक्षुः रक्षितुमिच्छुरत एवावहितः,समाहितः, शमादिसहितश्च, अदः, पूर्वोक्तं श्रवणपूर्वं, श्रवणादिकं, असकृत्पुनः पुनः, कुर्यात्, ततः कृती, कृतार्थः, पूर्णः, सर्वभूतस्थमात्मानं सर्व-भूतानि चात्मनि द्रष्टा, अत एव परवित्तरक्षुः, परब्रह्मवेत्तृशार्दूलः, ब्रह्मविदां वरिष्ठ इत्यर्थः, भविष्यति। 'अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत्। शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम्' इति भगवत्पूज्यपादोक्तेः ॥ ३० ॥

नारम्भकोऽस्य जगतोऽचित एक आत्मा
निर्विक्रियो न परिणाम्यतनुश्चिदात्मा ॥
नाभिक्रमे तु घटते परमाणुमानं
नैकं जडं तु परिणाम्यमतानुमानम् ॥ ३१ ॥

श्रवणादि वक्तुं तावदुपोद्धातत्वेनात्मन एव स्रष्टृत्वमाह-आत्मा जगदारम्भको वाऽहोस्वित्तदाकारपरिणामी वा, नाद्यः, इत्याह-अचितो, जडस्यास्य जगतः, एक आत्मा नारम्भकः। एकस्य विभोश्चिद्रूपस्य जडजगदारम्भकत्वासंभवात्। नापि द्वितीय इत्याह। अतनुर्निरवयवः, निर्विक्रियः, निर्विकारः, चिदात्मा, चिद्रूप आत्मा, परिणामी न भवति। निरवयवस्य निर्विकारस्य चिद्रूपस्य विभोः परिणामासंभवात्। तर्हि

नित्याश्चतुर्विधाः परमाणवः जगदारम्भका आश्रयदाश्च; किं वा त्रिगुणात्मकं जडं प्रधानं जगदाकारपरिणामीति चेन्नेति प्रथमं प्रत्याह। परमाणूनां मानं, प्रमाणं, अभिक्रमे, आरम्भे, न घटते। निरवयवानां तेषां सर्वात्मना संयोगे प्रथिमानुपपत्तेः, भिन्नयोः कार्यकारणयोगाभावात्, प्रागविद्यमानस्योत्पत्त्यसंभवाच्च, अत्यन्तभिन्नकार्यारम्भे, कार्ये द्वैगुण्यापत्तेः। कार्यद्वयस्य स्वन्यूनपरिमाणारब्धत्वदर्शनाच्च। द्वितीयं प्रत्याह-एकं, असहायं, जडं, श्रुतेरमतं अनुमानं, प्रधानं तु, न परिणामि, चेतनानधिष्ठितस्य जडस्य असामर्थ्यात् ॥ ३१ ॥

श्रुत्योर्णनाभिवसुधाद्युपमात्रयेण
या कार्यकारणविलक्षणता त्वभाणि ॥
सत्येव सास्य घटतेऽत्र विवर्तनीत्या
नित्यात्मनः प्रकटनं ननु मायिरीत्या ॥ ३२ ॥

तर्हि जगत्कस्मात् कथं वोत्पन्नं इत्यत आह श्रुत्येति—यथोर्णनाभिरिति श्रुत्या ऊर्णनाभिवसुधाद्युपमात्रयेण, या तु कार्यकारणविलक्षणताऽभाणि, प्रोक्ता, सा सती, निर्बाधैव, अत्र, जगदुत्पत्तौ, घटते। दृश्यते तु (१।१।६) इति न्यायात्, अतो विवर्तनीत्याऽधिष्ठानविषमसत्ताककार्यापत्तिर्विवर्त इति न्यायेन, मायिरीत्या, मायाविप्रकारेणात्मनः सकाशात्पूर्वलीनस्यास्य जगतः प्रकटनं भवति, नूनं, निश्चितमेतत् ॥ ३२ ॥

जातं यतो जगदिदं तदनुप्रवेशात्
तेनैव जीवति समस्तमदोऽभवेशा ॥
तत्रैव चाहुरविशेषविशेषभङ्गम्
सोपक्रमैवमुपसंहृतिराद्यलिङ्गम् ॥ ३३ ॥

एवं जगदुत्पत्तिं दर्शयित्वा "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इत्युक्तलिङ्गैः तात्पर्यावधारणं श्रवणमाह त्रिभिः। यत इत्युपादानत्वज्ञापनाय अव्ययम्। यतो, मायोपाधिकादात्मन, इदं जगज्जातं, सत्त्वेन तदनुप्रवेशात्। भावप्रधानो निर्देशः। समस्तं अदो जगत्, अभवेशा, मोक्षेश्वरेण, तेनात्मनैव, जीवति। स्वापे प्रलये वा विशेषो जन्मान्तरप्रापकं बीजं तेन सह वर्तते इति विशेषः तस्य; विगताः, ममत्वेन स्वीकृताः, शेषाः पुत्रभार्यादयोऽस्य सर्वैषणानिर्मुक्तस्य ज्ञानिनश्च, भङ्ग, लयं, यत्वैवाहुः श्रुतयः यतो वा इमानीत्याद्याः, एवं, उपक्रमेण सहिता सोपक्रमा, उपसंहृतिः आद्य-लिङ्गमुक्तम् ॥ ३३ ॥

दार्ढ्याय तस्य बहुशोऽभ्यसनं द्वितीयं
मानान्तरानवगतिः कथितं तृतीयम् ॥
मुक्तिः सुतृप्तिरिति तत्फलकं तुरीयम्
पञ्चार्थवादयुगु पञ्चमकं वरीयः ॥ ३४ ॥

तस्य श्रवणस्यानुभवपूर्वकं दार्ढ्याय, प्रकारान्तरेण; बहुशोऽनेकवारं, अभ्यसनं, आवर्तनं, द्वितीयं प्रमाणं, आगमं विना मानान्तरानवगतिः तृतीयं लिङ्गं कथितम्। 'अमृतः समभवत्' 'आत्मानं चेद्विजानीयाद० संज्वरेत्' इति श्रुतेः, मुक्तिः, सुतरां तृप्तिः निरंकुशेति तत्फलकं तुरीयं लिङ्गम्। 'अज्ञानमावृतिः तद्वद्विक्षेपश्च परोक्षधीः। अपरोक्ष-मतिः शोकहानिस्तृप्तिर्निरङ्कुशा' इति वचनात्। उत्पत्तिस्थितिलय-प्रवेशसंयमनरूपपञ्चार्थवादयुक्, उ, निश्चितं, वरीयः, श्रेष्ठं, पञ्चमकं लिङ्गम् ॥ ३४ ॥

त्वंपदार्थपरिशोधनकं च षष्ठं
स्याल्लिङ्गषट्कमिदमादरणीयमिष्टम् ॥
तात्पर्यकावधृतिरद्वितये परे षड्-
लिङ्गैरिदं श्रवणमत्र हि संशयद्विट् ॥ ३५ ॥

यदग्ने रोहितं रूपमित्यादिना तत्त्वंपदार्थपरिशोधनं षष्ठं लिङ्गं स्यात् इदं वाक्यार्थे दृष्टं लिङ्गषट्कं आदरणीयम्। अद्वितये परेऽखण्डैकरसे षड्लिङ्गैस्तात्पर्यकावधृतिः, तात्पर्यावधारणं, इदं, अत्र, वेदान्ते,श्रवण-मुक्तं, हीति प्रसिद्धम्। 'इत्थं वाक्यैस्तदर्थानुसन्धानं श्रवणं भवेत्' इति। इदं संशयाद्विद्, संशयभावनानाशकम्॥ ३५॥

वाक्यैस्तदर्थमनुसन्दधता सुभक्त्या
संभावितत्वत उताप्यविरुद्धनीत्या॥
कार्यं सदैव मननं त्वनुसन्धिलक्ष्माऽ-
संभावना यत इयात्समवर्तिसद्म॥ ३६॥

युक्त्या संभावितत्वानुसन्धानं मननमाह। तत्त्वमस्यादिवाक्यैः, तदर्थं, जीवब्रह्मैकत्वलक्षणं, लक्षणया उतापि अविरुद्धनीत्या, श्रुत्यनुकूल तर्केण च संभावितत्वतः अनुसन्दधता, मुमुक्षुणाऽनुसन्धिलक्ष्माऽनु-सन्धानलक्षणं,मननं, सदैव कार्यं, यतः,ईदृशान्मननात्,किंचिज्ज्ञस्य मे कथं सर्वज्ञत्वमित्यादिलक्षणाऽसंभावना, समवर्तिसद्म, यमगृहं, नाश-मित्यर्थः, इयात्॥ ३६॥

निःसंशयार्थगतचेतस एकतान-
त्वं ध्यानमुज्झितविजातिजवृत्तिभानम्॥
तद्धारणावत इमं विपरीतभावम्
उन्मूल्य राति सविकल्पसमाधिभावम्॥ ३७॥

निर्गतः संशयः यस्मादीदृशो जीवब्रह्मैक्यलक्षणो योऽर्थस्तं प्रति गतचित्तस्य, नाभ्यादिदेशे चित्तबन्धलक्षणधारणावतः पुरुषस्य,उज्झितं, त्यक्तं, विजातिजवृत्तिभानं यस्मिन्कर्मणि यथा तथा, यदेकतानत्वं, अनन्यवृत्तित्वं, तद्ध्यानमुच्यते। तत् इमं, विद्वद्बुद्धिप्रत्यक्षं, क्षुधेव

दृष्टबाधाकरं,विपरीतभावमुन्मूल्य, सविकल्पसमाधिभावं राति, अर्पयति ततः शनैः शनैः निर्बीजसमाधिः भविष्यति ॥ ३७ ॥

ईशाश्रितश्रुतिमतिध्यनुभावितो यः
चिन्त्योपमोऽब्धिरिव तिष्ठति शान्ततोयः ॥
ज्ञेयः समाहित इमां परमां सुकाष्ठां
मुक्तेर्गतो न स कदापि जहाति निष्ठाम् ॥ ३८ ॥

ईशेति । 'समाधिसिद्धिरीश्वरप्रणिधानात्' इत्युक्तेरशिाश्रितः । श्रुतिः श्रवणं, मतिर्मननं, धीर्निदिध्यासनं, ज्ञानं वा, आभिरनुभावितः यः चिन्त्योपमः, ध्यातृध्याने परित्यज्य अभ्यासवशाद्ध्येयाकारः शान्ततोयोऽब्धिरिव निश्चलस्तिष्ठति स समाहितो ज्ञेयः, इमां, मुक्तेः परमां काष्ठां, यो गतः, स कदापि, व्युत्थानदशायामपि, निष्ठामात्मनि निष्ठां, न जहाति ॥ ३८ ॥

काष्ठामिमां हि चरमां गतमेतमस्मा-
न्न च्यावयेत्कथमपीह हि कोऽपि तस्मात् ॥
सक्लेशजन्ममृतिहामतिहाय मान्या
धन्या गतिर्जिगमिषोरित एव कान्या ॥ ३९ ॥

हि, यस्मात्, इमां चरमां काष्ठां गतमेतं, योगिनं; अस्मात्समाधेर्निश्चलबोधाद्वा,इह हि, ब्रह्माण्डे, कोऽपि,देवादिः, प्रजापतिर्वा, कथमपि न च्यावयेत् । तस्मात्, सक्लेशजन्ममृतिहां, अविद्यादिक्लेशसहितजन्ममरणहर्त्रीं, एतां निष्ठां विहाय, ब्रह्मभावं जिगमिषोः,इतः, अस्याः पूर्वोक्तनिष्ठायाः, अन्या, इतरा, मान्या, धन्या च का गतिः, नैव कापि ॥ ३९ ॥

अत्राप्रमत्त उपलब्ध्युपलब्धमोदः
शान्तान्यचेष्ट गुणकाम उदस्तखेदः ॥
आत्मात्मदृष्टिपरितुष्टिमितोनुवृत्त्या
व्युत्थाय स स्मरति भावितपूर्ववृत्त्या ॥ ४० ॥

अनन्यहेतुत्वमाह। अत्रास्यां निष्ठायां समाधौ,अप्रमत्तः,'अप्रमत्तस्तदा भवति' इति श्रुतेः, उपलब्ध्या, बुद्ध्या, उपलब्धः, मोदो येन सः 'सुखमात्यन्तिकं यत्तत्'इति स्मृतेः।शान्ता,अन्येषां मनआदीनां चेष्टाश्च, गुणाश्च, कामाश्च यस्य।'यदा पञ्चावति० धारणाम्' इति श्रुतेः।'निस्पृहः सर्वकामेभ्यः' 'उपैति शान्तरजसं०'इति स्मृतेश्च। अतएवोदस्तः खेदो येन। आत्मना या आत्मदृष्टिस्तया, परितुष्ट इतः, प्राप्तः।'यत्र चैवात्मना०ति' इति स्मृतेः। ननु तदा वृत्त्यभावे समाहितत्वमपि कथं ज्ञायते इत्यत आह–भावितपूर्ववृत्त्या, अनुवृत्तिं व्युत्थाय स्मरति। 'वृत्तयस्तु तदानीम्०' 'वृत्तीनामनुवृत्तिस्तु प्र० भवेत्' इत्यभियुक्तोक्तेः॥ ४०॥

अज्ञानमाशु सकलं विनिहत्य भाव-
ज्ञानाविरोध्यपि ककान्तगतार्कभावत्।
मानाहितान्त्यमतिवृत्तिविदद्वयत्वं
यात्येक एव परिशिष्यत आत्मतत्त्वम्॥ ४१॥

एवमभ्यासवशाद्वाक्यप्रमाणेनाऽऽहिता, जनिता, या अन्त्यमतिवृत्तिः, चरमात्माकारबुद्धिवृत्तिस्तत्र प्रतिबिम्बिता या वित्स्वरूपज्ञानं, भावज्ञानाविरोध्यपि स्थितं यदज्ञानं,तत्सकलं,कला,कार्यं,तत्सहितं,आशु स्वोत्पत्तिसमकाल एव, निहत्य स्वयमद्वयत्वं याति, तदैकमेवात्मतत्वं परिशिष्यते। ननु निद्रायां स्वरूपज्ञानं अज्ञानं च विद्यते तदा स्वरूपज्ञानं न तन्नाशयति,तदेव वृत्त्यारूढं कथं नाशयेत्?;उत च तथात्वेऽपि स्वरूपज्ञानस्य वृत्तिज्ञानस्य च सत्वे कथमद्वैतमित्यत आह दृष्टान्तम्-ककान्तः,सूर्यकान्तः,तद्गतार्कभया तुल्या तद्वत् वृत्तिवित्।यथा सूर्यकिरणे प्रसारितकार्पासादेर्विरोधाभावेपि सूर्यकान्तानुप्रविष्टस्य तस्य विरोधित्वादग्निरूपेण दाह्यं कार्पासादि निःशेषं दग्ध्वा पुनः स्वरूपेणावस्थानं यथा, तथा स्वरूपज्ञानविरोधाभावेऽपि वृत्तिज्ञानस्य विरोधित्वा-

दज्ञाननाश उपपद्यते । निःशेषं तन्नाशे वृत्तिज्ञानं स्वरूपज्ञान एव लीयते तदाऽद्वयत्वमेव ॥ ४१ ॥

आत्मप्रबोधसमकाल विमुक्त एष
रोषादिदोषरहितोऽवहितः स्वतोषः ।
अज्ञार्थमुक्तमहिनिर्ल्वयनीव चास्य
प्रारब्धमत्र खलु संसरणं न चास्य ॥ ४२ ॥

स्वतोषः, आत्मतृप्तः, 'अस्याहिनिर्ल्वयनी मृता' इति श्रुतेः अहिनिर्ल्वयनीव, सर्वाङ्गात्पृथग्भूतं कंचुकमिवास्य प्रारब्धं, अज्ञजनबोधार्थमुक्तं तस्य तावदेवेत्यादिना, ज्ञानिदृष्ट्या तु तन्नैवातोस्य संसरणं, पुनर्जन्मादि लक्षणसंसारो, न, अन्यत्सुगमम् ॥ ४२ ॥

योगैः समाहितसमाहितता मताऽयः-
स्वर्णोपमा त्वनुपमा प्रथमा मता यः ।
तत्राक्षमः स परमां परमात्मदत्ता-
त्रेयाश्रयाद्गतिमियात्सततानुरक्तः ॥ ४३ ॥

योगैरिति । योगैरष्टांगाद्युपायैः, समाहिता, जनिता, समाहितता या, सा अयःस्वर्णोपमा, रसशक्त्याभिभूतायसः स्वर्णस्योपमा यस्याः । यावद्र सवीर्यं तावत्सुवर्णत्वभ्रमः, कालवशात्तन्नाशेऽयोरूपा पूर्वसिद्धा प्रकृतिरेव । तथैव ज्ञानरहितस्यापि व्युत्थानपर्यन्तं निरतिशयानंददो योगः न व्युत्थाने । ज्ञानिभिस्तु दृष्टदुःखप्रतिबन्धार्थं क्वचिदाद्रियते । या प्रथमा समाहिततोक्ता, सा तु अनुपमा, अत एव मता । यः मंदप्रज्ञः तत्राक्षमः, असमर्थः, सः सततमनुरक्तः सन्, परमात्मदत्तात्रेयाश्रयात् परमां, पुनरावृत्तिरहितां, गतिं, मुक्तिं, इयात्, गच्छेत् ॥ ४३ ॥

योऽनीश एवमतिमन्दमतिर्विधातुं
जिज्ञासुरीशमनिशं स भजेद्विधातुम् ।
योत्रावतीर्य जगतः स्थितिमत्रिजातः
शास्ताखिलस्य भजतोनुभजत्यजातः ॥ ४४ ॥

वक्तुर्जामिताभावात्तदेव प्रकारान्तरेणाह । यः जिज्ञासुरतिमन्दमतिः, एवं, पूर्वोक्तप्रकारेण, श्रवणादिकं विधातुं, कर्तुं, अनीशोऽसमर्थः, सोऽनीशं ईशं भजेत् । कोसावित्यत आह –यः जगतः स्थितिं विधातुं स्वयं अजातोऽप्यत्रावतीर्यात्रिजातोऽत्रिपुत्रः श्रीदत्तः, अखिलस्य देवादेरपि, शास्ता सन् , भजतोऽनुभजति ॥ ४४ ॥

यस्यास्त्यतीव सदयं हृदयं स्वमुक्त्यै
यः संस्मृतोघहृदयं सदयं स्वगुप्त्यै ।
जातं तमत्रिवरदं वरदण्डहस्तं
योऽर्चेद्गमिष्यति कृती स न दण्डहस्तम् ॥ ४५ ॥

तं विशिनष्टि द्वाभ्याम् । स्वस्य, निष्कामभक्तस्य, मुक्त्यै, यस्य हृदयं, अतीव सदयमस्ति, योऽयं कथमपि स्मृतः अघहृत् अस्ति । स्वगुप्त्यै, भक्तरक्षणार्थं, जातं, इहावतीर्णं, सदयं, दयाश्लिष्टं, वरदण्डहस्तं तमत्रिवरदं, दत्तं, योऽर्चेत् , स कृती, कृतकृत्यः सन् , दण्डहस्तं, मृत्युं, न गमिष्यति ॥ ४५ ॥

आदेयहेयपरलक्षणलक्षितं यो
यायातये परमशिक्षणशिक्षितं सत् ।
क्षित्यादितो गुरुधियोरुधियोपि पथ्यं
प्रोक्त्वोद्दधार स पुनाति जनाति तथ्यम् ॥ ४६ ॥

आदेयहेयपरलक्षणलक्षितं गुरुधिया, क्षित्यादितः, भूम्यादेः, सत्,

प्रशस्तं, परमशिक्षणशिक्षितं। उरुधियः स्थूलबुद्धेरपि, पथ्यं, हितकरं, याथातथ्ये, यद्वे, प्रोक्त्वा तमुद्धधार। भो जन! स दत्तात्रेयः, अ इवाचरतीति अति, तथ्यं पुनाति ॥ ४६ ॥

यदासन्नासन्नाभवदपि गुणाव्याकृतमुखं
यदासन्नांशानां गतय इह नो साधनसुखम्।
न शास्ता नो शास्त्रं न हि सदमृतं नापि च मृतम्।
तमिस्रा नो घस्रादिकमपि सहस्रांघ्रिरमृतम् ॥ ४७ ॥

इतः परं द्वादश शिखरिणीवृत्तानि। तैरुपनिषत्प्रतिपाद्योऽयं इति निर्दिशति। तत्रादौ नासदासीदिति श्रुतिमवष्टभ्यास्य स्रष्टृत्वं दर्शयति। यदेति। यदा सत् नाभवत्, असदपि न। गुणाः सत्वादयः, अव्याकृतं कारणं, मुखशब्दात्कार्यं च। शास्ता गुरुः, न। शास्त्रं वेदाद न हि। सत्, मीमांसकमतं स्वर्गादि। अमृतं, सुधा, 'विद्ययामृतमश्नुते' इत्युक्तमापेक्षिकं वा। अपि च मृतं, मृतिः, नपुंसके भावे क्तः मृत्युर्न,तमिस्रा रात्रिर्न, घस्रादिकं कालमानं न, सहस्रशीर्षेत्यादिनोक्तः सहस्रांघ्रिः,विराडपि न, अमृतं, मोक्षो, न। कुत इत्यत आह। इह, प्रलयकाले, आसन्नांशानां, समीपगतजीवानां, गतये, मुक्त्यै, साधनसुखं नासीत् ॥ ४७ ॥

तदासीध्द्वान्तारिः श्रुतमतचिदानन्दलहरी
हरीशब्रह्मात्मा स खलु परमात्माऽमृतझरी।
वरीवर्ति स्रष्टुं पुनरपि विलीनं जगदयं
स्वयं हैमाण्डं यः सृजति गतिदोऽयं स सदयः ॥ ४८ ॥

तदा ध्वान्तारिः,अज्ञानहरः,आसीत्, कोऽसौ.श्रुतमता,शास्त्रमता,या चिदानन्दलहरी अमृतझरी तद्रूपः। हरीशब्रह्मणामात्मा, तद्रूपो वा यः

स खलु दत्तात्रेयः परमात्मा वरिवर्ति । अयं दत्तात्रेयः, स्वप्रकृति-विलीनं सानुशयं जगत्पुनरपि तत्कर्मभोगार्थं स्रष्टुं यः स्वयं, असहायोऽपि साधनान्तरनिरपेक्षोऽपि, हैमं अण्डं, हिरण्यगर्भं,सृजति । एवं यः स्रष्टा, सोऽयं गतिदः सदयो दत्तात्रेयः ॥ ४८ ॥

पुरासीदात्मैको जगदिदमसौ वीक्ष्य च पुरा
चतुर्लोकान्सृष्ट्वाऽप्प्रमुखकृतपुंछिद्रजसुरान् ।
जिघत्सूंश्चैभ्योंगान्नद इह विदार्याविशदृग्
विदा प्रज्ञानं ब्रह्म भवति विरागयेष स सुदृक् ॥ ४९ ॥

तमेवैतरेयाभिमतं निदर्शयति । अत्रात्मा विराट् न । आत्मगृहीतिरितिन्यायाधिकरणात् (३।३।१६) परमात्मैव । भूतसृष्ट्यनुक्तावपि तां विना भौतिकलोकसृष्ट्यसंभवात् गुणोपसंहारन्यायेन अन्यत्रोक्तात्रोपसंहरणीया । पुरा, सृष्टेःपूर्वमिति कालाभावे परप्रसिध्द्योक्तम् । इदं जगत्,एकः,सजातीयभेदशून्यः,आत्मासीत्, नैव नामरूपे अपि, घटोत्पत्तेः पूर्वं मृदिवात्रेति ज्ञेयं । तदा वाङ्मनसयोरभावात् कर्तव्यं कुरुत इत्यादिलोकन्यायवदात्मासीदित्यत्र पुनरुक्तिदोषो न। जगदात्मनोः सामानाधिकरण्यं तु,यस्ते चोरः स स्थाणुरिति बाधायामप्युपपद्यते । असौ, श्रीदत्तः आत्मा,वीक्ष्य,पर्यालोच्य, पुरा,प्रथमं, अम्भःप्रभृतिचतुर्लोकान्सृष्ट्वा, चकारात्पूर्वं भूतान्यपि । लोकपालचेतनसृष्ट्यर्थं 'सोऽद्भ्य एव पुरुषम्' इति श्रुतेः । अप्प्रमुखतः कृतो यः पुमान्, तस्य मुखादिछिद्रेभ्यः जातान्, वागाद्यधिष्ठातॄन् अग्न्यादिसुरान्, 'यस्मिन्प्रतिष्ठिता अन्नमदाम'इति श्रुतेःजिघत्सून्, क्षुधितांश्च सृष्ट्वा'ताभ्यो गामानयत्० अन्नमेभ्यः सृजा' इत्यादिश्रुतिभ्यो, ज्योतिराद्यधिष्ठान० न्यायाधिकरणाच्च(२।४।१४) वागादिप्रेरकेभ्यस्तेभ्यो देवेभ्यो, यथोचितांगानि, शरीराणि, अन्नं च ददातीति तथोक्तः। स एतमेव सीमानं

विदार्येत्युक्तवन् मूर्धसीमानं विदार्येह संघातमध्ये, आविशत् ,निरवयवस्य विभोः बुध्द्‌यादावभिव्यक्तिमात्रमत्र प्रवेशः, न गृहादिप्रवेशवत् अथापि अदृक्, अदृश्यः,द्रष्टा,न विद्यते दृग्यस्मादिति समासेन निष्पद्यते। 'नान्योतोस्ति द्रष्टा' इति श्रुत्यन्तरात्। यद्वा देहावेशात् अदृगल्पज्ञः,त्रय आवसथास्त्रयः स्वप्ना इति द्रष्टा। तथाभूतोऽपि दैववशात् पुरुषे ह वा इत्युक्तकष्टदर्शनेन विरागी सन् ,स जातो भूतानीत्यादिना कोऽयमात्मेत्यादिना चोत्पन्नया विदा, येन वा पश्यतीत्यादि प्रज्ञानं, त्वंपदलक्ष्यं, तदेवैष ब्रह्मेत्यादिना ब्रह्म, तत्पदलक्ष्यार्थं, निरुपाधिकं. सामानाधिकरण्येनाखण्डैकरसं यद्भवति स एव दत्त एव। शोभना, भक्ताऽनुग्राहिका, दृग्यस्य ईदृशः ॥ ४९ ॥

जगद्धीशा वास्यं यदु सुखमनिच्छोऽधनगृधिः
सुधीर्भुंक्तेऽनेजज्जववदतिगं सर्वगमधीः ।
न वेदैकत्वेनास्य दृगितविशोकोऽस्ति स विभुः
प्रभुः शुक्रोऽकायोऽसमुचितविदाऽप्योयमविभुः॥५०॥

ईशावास्याभिप्रायेण तं निर्दिशति। हि,निश्चितं, जगदीशा, ईशनस्वभावेन, तेन श्रीदत्तेन, आच्छादनीयं स्वरूपेणातः अनिच्छः, त्यक्तसर्वेषणः,अधनगृधिः,धनाभिकांक्षारहितः, सुधीः, विवेकी, यत्स्वरूपभूतं परमसुखं, भुंक्ते,पालयति, तदनेजन्निष्कम्पं सत्, जववतो मनआदीनतिक्रम्य गच्छतीति तथा, यत्सर्वगमपि, अधीः, अकृतबुद्धिः, न वेद अस्येदृशस्यैकत्वेन दृग्द्रष्टा, विगतशोकोऽस्ति भवति, शोक इत्युपलक्षणं मोहादेः, 'यस्मिन्सर्वाणि'इति श्रुतेः। सपर्यगादित्याद्याह-विभुः, व्यापकः, प्रभुः,संवत्सरादिभ्यो यथायोग्यार्थदानक्षमः, शुक्रो,ज्योतीरूपः,अकायः, स्थूलसूक्ष्मशरीरहीनः, विभुरित्यनेनाकाशातिव्याप्तिं निवार्य कालेऽतिव्याप्तिं वारयति न विद्यते विभुः यस्मादित्यविभुः। अंधंतम इति

षण्मन्त्रतात्पर्यमाह-असमुच्चितविदाऽऽप्यः, समुचित इत्यत्र 'अपि माषं मषं कृत्वा छन्दोभंगं न कारयेत् 'इति छन्दःशास्त्रनियमेन ह्रस्वत्वं न दोषाय । ईदृशोऽयं श्रीदत्तः ॥ ५० ॥

श्रुतः श्रोत्रादेर्यः श्रुतिमुख इताहंकृतिगतिः
गतिर्नात्राक्ष्यादेर्भवति य उपास्योऽखिलगतिः ।
सुवेद्ये दभ्रात्माऽविदितविदितान्योऽमतमत-
स्त्वविज्ञातो ज्ञातुः स च हृतसुराहं श्रुतिमतः ॥ ५१ ॥

तलवकारता० । यः श्रीदत्तः 'श्रोत्रस्य श्रोत्रं०' इति श्रुतेः श्रोत्रादेः श्रुतिमुखः श्रुतः । 'अतिमुच्यधी०'इति श्रुतेः इताहंकृतेर्गतिरमृतरूपः । 'न तत्र चक्षुः' इति श्रुतेः अत्र श्रीदत्तेऽक्ष्यादेर्गतिर्न । 'येन वागभ्यु०' 'येनाहुर्म०' 'येनचक्षुं० येन श्रो० येन प्रा०' इत्यादिश्रुतेः योऽखिलगतिः, वागादिचालकः 'यदि मन्यस' इति श्रुतेः सुवेद्ये दभ्रात्मा,अकृत्स्न इव यो भवत्यविदितविदिताभ्यामन्यः,अमतस्य मतः, यश्च ज्ञातुरविज्ञातः, हृतः, सुराणां अहं येन अग्निवाय्विन्द्रादिगर्वहर्ता, स श्रुतः श्रीदत्तः ॥ ५१ ॥

त्र्युपन्यासे धर्मप्रमुखपर ॐ वाच्य उदितः
परो व्यक्तात्कार्यादपि चिदविकार्याद्य उदितः ।
य आत्मा सूक्ष्मोत्ताऽगुण इनमुखज्योतिरगति
र्ह्यभीतिः सोन्तर्दृग्वरितृवरधीसारथिगतिः ॥ ५२ ॥

काठका० त्रयाणामेव चैव० श्नेति न्यायात् (१।४।६) नचिकेतः प्रश्नानुसारेण यमकृतः त्रयाणामग्निर्जीवात्मनां, उपन्यासः यस्मिन् तस्मिन्काठके, अन्यत्र धर्मादिति श्रुतेर्धर्ममुख्येभ्यः परोन्यः । सर्वे वेदा इति श्रुतेरोंवाच्य उदितः।यः न जायते इति श्रुतेरात्मा उदितः। अशब्दमस्प० इति श्रुतेर्योऽगुणः। यस्य ब्रह्मचेति श्रुतेः, अत्ता चराचरग्रहणात्

( १।२।९ ) इति न्यायाच्च अत्ता, उपसंहर्ता ।'न तत्र सूर्य' इति श्रुतेः अनुकृतेस्तस्य चेति न्यायात् (१।३।२२) इनमुखानां, सूर्यादीनां ज्योतिः । नैव वाचेति श्रुतेः अगतिर्वागाद्यविषयः । यदिदं किं च० भयादस्या० पंचम इति श्रुतेः, बिभेत्यस्या इति भीतिः । न विद्यते भीतिर्यस्याः । महद्भयमिति श्रुतेः यावदग्न्यादिभयहेतुः, कंपनादिति न्यायात्(१।३।३०)आवृत्तचक्षुः आत्मान ५ रथिनं०इन्द्रियेभ्यः पराह्य० नायमात्मा प्र० इत्यादिश्रुतेः, आनुमानिकमप्येकेषामित्यादिन्यायाच्च (१।४।१) इन्द्रियार्थादिभ्यः सूक्ष्मः, सा काष्ठा सा परा गतिरित्युक्तः सर्वांतरतमः सूक्ष्मः पुरुषः । वरिता चासौ वरधीसारथिर्विज्ञानसारथिश्च, तस्य गतिः, यः सः श्रीदत्तः ॥ ५२ ॥

रयिप्राणौ योऽब्दादितनुरसृजत्सृष्टय इमैः
स्तुतः खाद्यैर्देवैर्य उत गतगर्वैस्तनुधरान् ।
व्यधात्प्राणांस्तज्ज्ञक्रमगतिद आत्माखिललय-
स्त्रिमात्रेक्ष्यं प्राणादिध्रुवमकलो याति यममा ॥ ५३ ॥

प्रश्नोप० अब्दादितनुः, संवत्सरायनपक्षाहोरात्रात्मा प्रजापतिः, एतौ मे बहुधा प्रजाः करिष्यत इति सृष्टये रयिप्राणौ असृजत् प्रथमप्रश्नभावः १। उत च यः ' सोभिमानादूर्ध्वमुत्क्रमत०' इति श्रुतेः इमैर्गतगर्वैः । ' आकाशो ह वा एष देव ' इत्यादि श्रुतेः खादिदेवैः । ' एषोग्निस्तपतीत्यादिना प्रश्नसमाप्त्यंतं स्तुतः द्वि० प्र० २ । ' कत्येव देवाः प्रजां विधारयंत ' इत्यादिनोक्तान् तनुधरान् यो व्यधात् यश्चोत्पत्त्यायतिस्थानविभुत्वादिना तज्ज्ञः प्राणज्ञः, तस्य क्रमगतिदः क्रममुक्तिदः भवति तृ० प्र० ३ । एवं त्रिभिः क्रममुक्त्यर्थं उपासना । अथ एकेन ज्ञानं । एतस्मिन्पुरुषे कानीत्यादिना । परे देवे मनसीत्यादिनोक्तापेक्षया सर्वं पर आत्मनीत्युक्तो मुख्योयमात्मा कुतः, पृथिवी तन्मात्रादीनामखिलानां लयो यस्मिन्निति च० प्र० ४ । परं चापरं

चेत्यादिश्रुतेः । ईक्षतिकर्मव्यपदेशादिति न्यायाच्च ( १।३।१३ ) त्रिमात्राभिरीक्ष्यं इति पंच० प्र० ५। स प्राणमसृजतेत्यादिश्रुतेः प्रा० ादिभुवं यं 'इमाः षोडश कला' इत्याद्युक्तप्रकारेण विगताः कला यस्येदृशो नामरूपोपाधिविमुक्तो विद्वान्याति, अभेदेन पुरुष एव भवतीत्यर्थः । प्र० ६ । सोऽसौ दत्तात्रेयः ॥ ५३ ॥

अदृश्योऽप्राणादिर्विभुरपि च योनिः परविदा
ऽधिगम्योऽजो योऽन्योक्षरत उत चास्वादिजनकः ।
द्युपूर्वोत्रं न्यस्तो विगतसकलोपाधिकगति-
र्विदा ग्रन्थ्याद्यन्तोस्य सकलवित्सोयमगतिः ॥ ५४ ॥

मुण्डक० अथ पराय येत्यादिश्रुतेर्यः,परविद्याधिगम्यः,यत्तदद्रेश्यमि-त्यादिश्रुतेः, अदृश्यत्वादिगुणक इति न्यायाच्च (३।२।२।) अदृश्यः, एतदग्राह्यादेरुपलक्षणम् ।'अप्राणो ह्यमना' इति श्रुतेःन विद्यते प्राणादि यस्य सः अप्राणादिः। विभुर्व्यापकः,योनिः भूतयोनिः। 'अक्षरात् परत' इति श्रुतेः योक्षरतोन्यः। उत च'एतस्माज्जायते'इति (असुः प्राणः आदिः येषां ते ) श्रुतेरस्वादिजनकः । यस्मिन् द्यौरितिश्रुतेः, द्युभ्वाद्यायतन-मिति न्यायाच्च (१।३।१) अत्रास्मिन्द्युपूर्वो विन्यस्तः, ओतत्वेन स्थितः 'यथा नद्यः' इति श्रुतेः यो विगतसकलोपाधिकगतिः । 'भिद्यते हृदयग्रन्थिः' इति श्रुतेः अस्य विदा, ज्ञानेन, सकलग्रन्थ्यादेरन्तः नाशः 'यः सर्वज्ञ' इति श्रुतेः यः सकलवित्,'न चक्षुषा गृह्यते' इति श्रुतेर्य-श्चक्षुरादेरगतिः अविषयत्वात् । ध्यायमानस्य गतिरिति तात्पर्यम् । श्रुतिश्च 'ज्ञानप्रसादेन० न' इति । एवं भूतः सोयं श्रीदत्तः ॥ ५४ ॥

इदं सर्वं ह्योमक्षरमिदमपि ब्रह्म खलु चा-
यमात्मा ब्रह्मेति श्रुतिरवददेष श्रुतिवचाः ।
समष्टिव्यष्ट्यात्माऽविकृत उत मात्रामितपद-
त्रयातीतोऽद्वैतोऽभवशिवतुरीयोऽयमपदः ॥ ५५ ॥

माण्डूक्य० ॐकारस्य सर्ववाग्जातव्यापकत्वात् ब्रह्मणोऽभिधेय-स्यातिप्रियाभिधानत्वात् हि, निश्चयेन, इदं सर्वं जगत् ॐ अक्षरमेवेति सामानाधिकरण्यं नामिनाम्नोरभेदात् । खलु, निश्चयेन, इदं, वर्तमान-कालीनं परिदृश्यमानं अभिधेयं ब्रह्मैव, तस्यैव सर्वरूपव्यापकत्वात् चकाराद् भूतं भविष्यदपि ओंकाररूपं ब्रह्मैव, अयं आत्मा स्वप्रका-शोऽपरोक्षः कूटस्थो ब्रह्मैवेति यं श्रुतिरवदत् एष सोयं श्रीदत्तः श्रुति-वचाः, वेदकर्ता । समष्टीनां,विराड्हिरण्यगर्भाव्याकृतानाम् । व्यष्टीनां, विश्वतैजसप्राज्ञानां चात्मा, जाग्रदादिद्रष्टारस्ते यथा विकारिणः तथा नायं किन्तु अविकृतः, प्रपंचोपशमत्वात् सर्वविकारशून्यः । उत च अकारोकारमकारमात्रानिर्मितं यत्पदत्रयं सोयमात्मेत्याद्युक्तं पादत्रयं ततोप्यतीतः अग्रहणान्यथाग्रहणलक्षणाभावात् ,अत एवाद्वैतः। अभवः प्रपंचोपशमश्चासौ शिवश्च ईदृशः। पूर्वत्रयापेक्षया तुरीयः। अपदः नामात्रे विद्यते गतिरित्युक्तेः ईदृशः सोयमपदः श्रीदत्तः ॥ ५५ ॥

स सज्ज्ञानानन्तो हृदि निजविदे सर्वसुखदः
सहाभ्रादिस्रष्टाऽन्वयत इह कोशेषु नृविधः ॥
प्रतिष्ठांत्ये सृष्ट्वा य उ तदनुविष्टः परममुद्
भृगुस्तप्त्वा कोशात्ययत इममापैष भयनुत् ॥ ५६ ॥

तैत्तिरीयोपनिषत्सिद्धः सः श्रीदत्तः, सज्ज्ञानानंतः सत्यज्ञाना-नन्तरूपः,यः हृदि,गुहायां,निजविदे, अभेदेन स्ववेत्त्रे, सहैकसमयाव-च्छेदेन सकलसुखदः,यो वेद निहितमिति श्रुतेः । अभ्रादेः, आकाशादेः स्रष्टा । इह पञ्चसु कोशेषु, अन्नाद्यानन्दान्तेषु । नुः अन्नमयादेर्विधेव विधा यस्य स नृविधः, तस्य पुरुषवि०ध इति श्रुतेः। अन्त्ये आनन्द मये प्रतिष्ठा पुच्छत्वेनोक्त आधारलक्षणया ब्रह्मैव प्रतिष्ठा, आनन्द-मयोभ्यासात् इतिन्यायात् । (१।१।१२) तत्सृष्ट्वा० त्यच्चाभवदिति

श्रुतेः। यः जगत् सृष्ट्वा तदनुविष्टोऽनुप्रविष्टः। एको मानुष आनन्द इत्यारभ्य स एको ब्रह्मण आनन्द इत्युक्तेः परममुत् ,परमानन्दरूपः। भृगुर्वारुणिः पित्राज्ञया तपस्तप्त्वा एतमानन्दमयमात्मानमुपसंक्रम्येत्युक्तेः अन्नमयाद्यारभ्यानात्मत्वेनानन्दमयपर्यन्तानां पञ्चकोशानामत्ययतः अतिक्रमणेनेमं सत्यज्ञानानन्दलक्षणमभेदेनाऽऽप, प्राप, यश्चाभेदज्ञातुः भयनुत् अथास्मि० भवतीत्यन्वयव्यतिरेकाभ्यां श्रुत्याऽभेदज्ञातुरभयं प्रतिष्ठाप्तिश्चोक्ता ईदृशः सः एष श्रीदत्तः॥ ५६॥

परो भूमा नामादित उ दहरो ज्योतिरपि चा-
न्तरः प्राणो वैश्वानर उदित आकाश इति यः।
श्रुतो यज्ज्ञानात् सर्वविदपि हि यत्स्रष्टृ सदिहा-
नुविष्टं व्याकृत्तत्त्वमसि नवधोक्तोयमिह सः॥५७॥

छान्दोग्य० (७-२३) यो भूमा तत्सुखमित्यत्र नामादितः परः भूमात्वेन विजिज्ञासितव्यः इति यो भूमा उक्तः स एवायं दत्त इति प्रत्येकं सम्बध्यते। भूमा संप्रसादादितिन्यायात् (१।३।८) तथा उ अपि दहरः। अथ यदिदमस्मिन्ब्रह्मपुरे दहरमित्यादिश्रुतेः, 'दहर उत्तरेभ्यः' इति न्यायात् (१।३।१४) तथा ज्योतिरप्ययम्। 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इति श्रुतेः, 'ज्योतिश्चरणाभिधानात्' इति न्यायाच्च (१।१।२४) अन्तरः। य एषोऽक्षिणीत्यादिश्रुतेः, अन्तर उपपत्तेरितिन्यायाच्च (१।२।१३) यद्वा 'अथ य एषोंतरादित्य' इति श्रुतेः, अन्तस्तद्धर्मोपदेशादिति न्यायाच्च (१।१।२०) अन्तरशब्देनान्तर इति गृहीतव्यः। तथा कतमा सा देवता प्राण इति होवाचेति श्रुतेः, प्राणस्तथानुगमादिति न्यायाच्च (१।१।२८) यः प्राणः। तथाऽऽत्मानं वैश्वानरमुपास्त इति श्रुतेः, वैश्वानरः साधारणशब्दविशेषादिति न्यायाच्च (१।२।२४) यः वैश्वानर इत्युदितः उक्तः, विश्वे नरा यस्य,

विश्वश्चासौ नरश्चेति वा विश्वानरः, नरे संज्ञायाश्चेति दीर्घत्वं ततः स्वार्थे ताद्धित इति वैश्वानरः, राक्षसवत्। तथा च अस्य लोकस्य का गतिः आकाश इति होवाचेति श्रुतेः, आकाशस्तल्लिंगादिति न्यायात् (१।१।२२) आ समन्तात् काशते प्रकाशत इति आकाशः इति यः आकाशशरीरं ब्रम्हेत्यादिना श्रुतः। येन अश्रुतश्श्रुतं भवतीत्यादि श्रुतेर्यज्ज्ञानात्सर्वविद् भवति। हीति प्रसिद्धः सर्वं खल्विदमिति श्रुतेः; सर्वत्र प्रसिद्धोपदेशात् इति न्यायाच्च (१।२।१) अपि यत् स्रष्टृ तेजोबन्नोत्पादकं सदेव सौम्येत्यत्र तत्तेजोऽसृजतेत्यादिश्रवणात्। यश्च नामरूपे करोतीति व्याकृत् सत्, इह, सृष्टपदार्थेषु अनुविष्टं, अनुप्रविष्टं, अनेन जीवेनात्मनानुप्रविश्य नाम० काङ्करवाणीति श्रुतेः। यश्च श्वेतकेतवेऽरुणेन नवधा, नवप्रकारेण, स य एषोणिमेत्यादिनोक्तः, इह लोके सोयं श्रीदत्तो ज्ञेयः॥ ५७॥

अहं ब्रम्हास्मीति प्रतिपदितिसाक्षी श्रुतिमतोऽ-
मृतोंतर्याम्यात्माक्षरमखिलधृक् शास्तृ जगतः।
द्वयात्मा चाकाशो य उत सवियत्पञ्चजनभूः
जगद्भूर्ज्ञातेस्मिन्विदितमखिलं सोयमधिभूः॥ ५८॥

बृहदारण्य० अहं ब्रह्मास्मीति वाक्येन यः ब्रह्माभिन्नः। प्रतिपदो, बुद्धेरितयो, वृत्तयः, तत्साक्षीति श्रुतिमतः। यः पृथिव्यां तिष्ठ० त इत्यादिश्रुतेः, अन्तर्याम्यधिदैवादिष्विति न्यायाच्च (१।२।१८) यः अन्तर्याम्यमृत आत्मा। एतद् वा अक्षरं गार्गीति श्रुतेः, अक्षरमम्बरान्तधृतेरिति न्यायाच्च (१।३।१०) यदक्षरमुच्यते किमोंकारः। एतस्मिन्खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चेति श्रुते, आकाशाद्याखिल धृक्। तर्हि किं प्रधानं, न, एतस्य वाऽक्षरस्य प्रशासने० धृत इतिश्रुतेः, सा च प्रशासनादितिन्यायाच्च (१।३।११) चेतनसूर्यादिजगतः

शास्तृ । यश्च मधुब्रह्मणोक्तं द्वन्द्वैकत्वं तद्रूपः द्वयात्मा । तथाकाशो ह वै नाम नामरूप० श्रुतेः, आकाशोर्थान्तरत्वादिव्यपदेशादिति न्यायाच्च (१।३।४१) य आकाश उच्यते । उत च यः यस्मिन्पञ्च पञ्चजना० मृतमिति श्रुतेः, 'न संख्योपसंग्रहादपि नानाभावादतिरेकाच्चेति न्यायाच्च' (१।४।११) सवियतां आकाशसहितानां प्राणस्य प्राण इत्यादिनां श्रुत्युक्तानां पञ्चानां पञ्चजनानां, भूः, प्रतिष्ठास्ति । 'यो वै बालाके' इति श्रुतेः जगद्वाचित्वादित्यादिन्यायाच्च (१।४।१६) यः जगद्भूर्जगदुत्पत्तिस्थानम् । तथा च आत्मा वाऽरे० विदितमिति श्रुतेः, अस्मिन् ज्ञाते, विज्ञाते सति, अखिलं विदितं स्यात् , सोऽयं भगवान श्रीदत्तः अधिभूः, 'सर्वस्य वशी सर्वस्येशान' इति श्रुतेः, 'पत्यादिशब्देभ्यः' इति न्यायाच्च (१।३।४३) सर्वेषामधिपतिः ॥ ५८ ॥

श्रुतिशिरोभिरिति प्रतिपादितः
स्मृतिभिरेव हि सोऽयमपादितः ।
क इतरो भजतो निजतोषकृत्
स्मरणमात्रत एष हि रोषकृत् ॥ ५९ ॥

एवं दशोपनिषत्प्रतिपाद्योयं भगवान् श्रीदत्त इति विस्तरादुक्तम् । अनुमानप्रतिपाद्यत्वमाह इतः परं दशाभिर्द्रुतविलंबितवृत्तैः । एवं श्रुतिशिरोभिः स्मृतिभिः प्रतिपादितः स एव हि अयं श्रीदत्तः । इतः इतरोऽन्यः,कः भजतो, भक्तान् , अपात् , संसारभयाद्रक्षितवान् , न कोऽपि । अत एव निजतोषकृत्स्वभक्तसंतोषजनकः, एष हि स्मरणमात्रतः, रोषमुपलक्षणात्कामादिकं कृन्ततीति तथा भक्तानर्थनिवारणपूर्वकं संतोषकृदित्यर्थः ॥ ५९ ॥

मधुकराजगराप्तविरागता-
सुपरितुष्टिहृताऽसुधनात्मता
ननु कयाधुभुवे कथिताऽर्पिता
हृतभयेन तु येन विमुक्तता ॥ ६० ॥

मधुकराजगराभ्यां क्रमादाप्ता विरागता, सुपरितुष्टिश्च, ताभ्यां क्रमात् हृता, त्यक्ता या असुधनात्मता, प्राणात्मता धनात्मता च, कयाधुभुवे, प्रल्हादाय, येन कथिता। हृतभयेन येन च कयाधुभुवे विमुक्तता अर्पिता सोऽयं श्रीदत्तः ॥ ६० ॥

परमयोगमुवाच मदालसा-
भुव इतो झटितीह मुदालसाः
अपि लभन्त इमां परमां गतिं
न पितृयाणगवत्पुनरागतिम् ॥ ६१ ॥

मदालसाभुवेऽलर्काय। 'आन्वीक्षिकीमलर्काय प्रल्हादादिभ्य ऊचिवान' इति। परमयोगं, मोक्षाख्यं य उवाच। इतो योगादिहाधिकारिलोके, झटिति, शीघ्रमलसाः, मन्दा अपि। मुदा, श्रमाभावादानन्देन। इमां, विद्वद्बुद्धिगोचरां, परमां, पुनरावृत्तिरहिताम्। गतिं, मोक्षं, सा काष्ठा सा परागतिरिति श्रुतेर्लभन्ते। पितृयाणगवत्कर्मीव, पुनरावृत्तिं, संसारं, न लभन्ते सोऽयं श्रीदत्तः ॥ ६१ ॥

समनयद्य उ विष्णुपदान्वित-
स्वपरमाह्वयमालिनमन्वितः।
सुरुचिना शुचिनाऽपि च कव्यभुक्
सुगममागममानितहव्यभुक् ॥ ६२ ॥

सुरुचिना, भास्वता सूर्येण, शुचिनाग्निनापि च समन्वितः यः, कव्यभुक्,श्राद्धान्नभुक् सन् ,विष्णुपदान्वितस्वपरमाह्वयमालिनं,विष्णुपदान्वितः,यः स्वपरमाह्वयः, दत्त इति प्रसिद्धः, तेन मालते शोभते इति तथोक्तस्तं, विष्णुदत्तमित्यर्थः तं, सुगमं, सुगतिं, मोक्षमिति यावत् , अनयत् , प्रापयत् । ननु पितृभोग्यं कव्यं कथं स्वयं भुक्तवान् अत उक्तं कव्यभुगिति । तत्राह—आगममानितहव्यभुक्, आगमो, वेदः, तद्द्वारा मानिताः, संमानिताः; हव्यभुजो देवा, उपलक्षणात्कव्यभुजोऽपि येन स तथाभूतः, स्वयं सूर्याग्निभ्यां सह ब्राह्मणरूपेण देवपितृस्थानापन्नो भूत्वा वेदोक्तप्रकारेण पार्वणश्राद्धं सम्पाद्य देवपितृतृप्तिप्रदोऽभूत् इत्यर्थः ॥ ६२ ॥

तनयकामनया व्ययमायुषः
कृतवतो नमतोऽव्ययमायुषः ।
क्षितिभृतो हि यतोऽभवदुत्तमं
फलमलं तमुशन्ति हि सत्तमम् ॥ ६३ ॥

तनयकामनया, पुत्रेच्छया, सेवार्थं, आयुषो, जीवितकालस्य, व्ययं कृतवतः, नमतः, नित्यं भक्त्याः प्रणामं कुर्वतः, आयुषः, एतन्नाम्नः क्षितिभृतो,राज्ञः,यतो,यस्मात् ,अलमत्यर्थमुत्तममैहिकमुत्तमपुत्रप्राप्त्यादिलक्षणमामुष्मिकं निःश्रेयसलक्षणं चाभवत् , ईदृशफलदातारं तं, हि, निश्चयेन, सत्तमं उशन्ति ॥ ६३ ॥

क्षितिसुरादिकलिङ्गविवर्जितं
यमहिराश्रमलिङ्गविवर्जितम् ।
स्म परिपृच्छति पिङ्गल आश्रमं
य उ शशंस च पंचममाश्रमम् ॥ ६४ ॥

ब्राह्मणादिकवर्णलिङ्गात्रिवर्जितं ब्रह्मचर्याद्याश्रमलिङ्गविवर्जितं च यं प्रति पिंगलोऽहिः नागः, वर्णाश्रमादिलिङ्गविवर्जितः कोऽयं तवाश्रम इत्याश्रमं पृच्छति स्म । लट् स्मे इति भूतार्थे लट् । उ अपि, एवं पृष्टो यश्च श्रुतिशिरः प्रसिद्धं स्वकीयं पञ्चममाश्रमं शशंस, प्रतिपादयामास, मुख्यं संन्यासं कथयामासेत्यर्थः । तथा श्रुतिः, 'कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत्तत् च न मुख्योऽस्ति । कोऽयं मुख्य इति चेदयं मुख्यो न दण्डं न शिखां न यज्ञोपवीतं नाच्छादनं चरति स परमहंसः । न शीतं नोष्णं न सुखं न दुःखं न मानावमानौ षडूर्मिवर्ज्यं निन्दागर्वमत्सरदम्भदर्परागद्वेष-कामक्रोधलोभमोहहर्षाऽसूयाहंकारादि हित्वा स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तम्' इत्यादिः । सोऽयं श्रीदत्तः ॥ ६४ ॥

य उशतेऽखिलयौगिकवैभवं
ध्रुवमदात्सबलाक्षयवैभवम् ।
भुजसहस्रमजस्रनिजस्मृतिं
स कृतवीर्यसुवीर्यभुवे मृतिम् ॥ ६५ ॥

अणिमाद्यखिलयौगिकवैभवं उशते कामयमानाय । कृतवीर्यस्य राज्ञः, सुवीर्यं अनन्तव्रतसूर्याराधनोपलब्धं तेजः, तस्माद्भवतीति तस्मै कृतवीर्यसुवीर्यभुवे हैहयार्जुनाय । ध्रुवं, निश्चितं, बलेन सहितं अक्षयं वैभवं, परचित्तज्ञतानेकदेहधारणवायुवत्संचरणाद्यखिलयोगासिद्धिरूपं । इच्छया भुजानां सहस्रं,अजस्रं,नित्यं, निजस्मरणं,अन्ते मृतिं, ख्यात्या-धिकान्मरणं, यद्वा अमृतिमिति पदच्छेदः, अमृतिं, मोक्षं च योऽदात् सोऽयं श्रीदत्तः ॥ ६५ ॥

कुजनसंगमुपेक्ष्य मरुद्वनैः
सुजनसंगमपेक्ष्य सुसाधनैः ।
इह हि साध्यसुरेभ्य उपादिशत्
परगतिं य इहाखिलमाविशत् ॥ ६६ ॥

इह हि, भूलोके, शरणमागतेभ्यः साध्यसुरेभ्यः, साध्यदेवेभ्यः, कुजनसंगं, दुर्जनसंगतिं, आसुरराक्षससंपत्प्रापिकां उपेक्ष्य; सुजनसंगं, सज्जनसंगतिं, दैवसंपत्प्रापिकामपेक्ष्य; मरुद्धनैः,देवधनैः अभयं सत्वसंशुद्धिरित्यादिदेवसंपत्त्येत्यर्थः। सुसाधनैः, अन्तरंगभूतैः शमादिभिः उपलक्षितां परगतिं य उपादिशदुपदिदेश। कोऽसौ, य इह, ब्रह्माण्डे, अखिलं, भूतभौतिकजातं, आविशत्, जीवात्मनान्तर्यामिरूपेण च प्रविवेश, सोऽयं श्रीदत्तः ॥ ६६ ॥

स्मरणमात्रत आगममात्मनः
श्रुतवतः स्मरतश्च यतात्मनः ।
पुरत आप यतो दलभक्षणः
कवचमाप स एष शुभेक्षणः ॥ ६७ ॥

'दलादनो महायोगी वसन्यो वै निजाश्रमे। कदाचिदस्मरत्सिद्धं दत्तात्रेयं दिगम्बरम्। दत्तात्रेयः स्मर्तृगामी त्विततिहासं परीक्षितुम्' इत्यादिरुद्रयामलोक्तमवष्टभ्याह-स्मरणमात्रतः, आत्मनः, स्वस्य, आगमं श्रुतवतः, पुनश्च ' वामहस्तेन वरदो दक्षिणेनाभयप्रदः ' इत्यादिध्यानं स्मरतः, न केवलं बाह्यदृष्टया किन्तु यतात्मनः, ईदृशस्य दलादनस्य पुरतः सहसाग्रभागमाप, प्राप। य इति शेषः। यतः, स्मरणमात्रेणाग्रतः प्राप्तात्, दलभक्षणः, दलादनऋषिः, कवचं, नामैकदेशग्रहणात् वज्रकवचं, अन्वर्थकं आप। स्वार्थं परोपकारार्थं च वज्रकवचं लब्धवान्। स एष शुभेक्षणः, भक्तानुग्राहककरुणारसपूर्णदृष्टिः, श्रीदत्तात्रेय एव ॥६७॥

हतपतिं य इवार्तकरेणुकां
अतिविलापवतीं ननु रेणुकाम् ॥
द्रुतमुपेत्य तयाऽर्थित आदिशत्
स्वपतिना सह दाहविधिं स्वयम् ॥ ६८ ॥

कार्तवीर्यार्जुनपुत्रैर्हृतः पतिः धवः जमदग्निर्यस्यास्तां, ननु, निश्चितं, हृतः पतिः पालको गजो यस्यास्तां, अत एवार्तकरेणुकां, आर्तां हस्तिनीमिवानन्यशरणां, पुनश्चातिविलापवतीमतिशयेन परिदेवयन्तीं, रेणुकां, यो द्रुतमुपेत्य, वात्सल्येन स्वयमेवाग्रत आगत्य, त्वमाचार्यो भूत्वा भर्त्रा सह दाहविधिं कथयेति तयाऽर्थितः, प्रार्थितः यः, स्वयं, स्वतः, न तु शिष्यादिद्वारा, स्वपतिना सह दाहविधिं तस्यै यः आदिशत् , आदिदेश, सोऽयं श्रीदत्तः । एतत्सर्वमप्युक्तमपेक्षितमनुक्तं च श्रीदत्तमाहात्म्यात् अवगन्तव्यम् ॥ ६८ ॥

निद्रा मातृपुरेऽस्य सह्यशिखरे पीठं मिमङ्क्षा पुरे
काश्याख्ये करहाटकेऽर्घ्यमवरे भिक्षास्य कोलापुरे ॥
पाञ्चाले भुजिरस्य विठ्ठलपुरे पत्रं विचित्रं पुरे
गान्धर्वे युजिराचमः कुरुपुरे दूरे स्मृतो नान्तरे ॥ ६९ ॥

अस्य दिनचर्यामाह—अस्य,भगवतः श्रीदत्तात्रेयस्य,इति प्रत्येकं सम्बध्यते । अस्य मातृपुरे, रेणुकापुरे, सह्याधोभागे निद्रा । निद्रास्थानमिति यावत् । एवमन्यत्रापि । सह्यशिखरे,सह्याद्रिशृङ्गे, पीठं, आसनम् निवा, सस्थानमिति यावत् । काश्याख्ये पुरे भागीरथ्यां, मिमङ्क्षा,स्नानम् । करहाटकदेशेऽर्घ्यं, अर्घ्यदानं, प्रातःसन्ध्यावन्दनमिति यावत् । अवरे, साक्षाल्लक्ष्मीनिवासभूतत्वात्सर्वश्रेष्ठदक्षिणकाश्याख्ये कोलापुरेऽस्य भिक्षा,भैक्ष्यचर्याचरणम् । पाञ्चालपुरेऽस्य भुजिः,भोजनम् । विठ्ठलपुरे, पाण्डुरङ्गपुरे भीमातीरेऽस्य विचित्रं पत्रं, तिलकधारणम् । गान्धर्वपुरे-भीमामरजासङ्गमेऽस्य युजिर्योगो,ध्यानमिति यावत् । कुरुपुरे, स्यमन्तपञ्चकतीर्थेऽस्याचमः, आचमनम् एवं प्रत्यहं दिनचर्यां कुर्वतः कथमस्योपलब्धिः इत्यत आह । एवं भूतोऽपि यः भक्तेन स्मृतो दूरे न वर्तते । किन्तु स्मरणाव्यवहितकाल एव स्मर्तुरांतरे मानसकमल एव योऽस्ति आविर्भवति च स्वरूपेण ॥ ६९ ॥

इत्यत्रैजति निर्गुणोऽपि गुणिवन्नित्योऽमना मायया।
सर्वात्मा विभुरेकधापि बहुधा भात्यप्रशशीवानया॥
नानाख्यात्मककुण्डलादिषु सदा सत्कांचनत्वं यथा।
प्राङ्मध्यान्तत एष सन्विकृतिषु कूटस्थ एकस्तथा॥७०॥

सर्वात्मा, सर्वेषां ब्रह्मादिस्तंबान्तानां अंतरात्माऽत एव विभुः, व्यापकः, विविधो भवतीति वा विभुः, 'तदात्मान ५ स्वयमकुरुत'। 'अजायमानो बहुधा विजायते' इत्यादिश्रुतेः। अथापि 'नायं कुतश्चिन्न बभूव कश्चित्'इति श्रुतेर्विरोधो न मन्तव्यः। तस्या आत्मनः षड्भाव विकारनिषेधपरत्वात्, अस्याः पूर्वोक्तश्रुतेस्तु मायामहिम्नाऽविकृत-स्वरूपेणात्मनोनेकत्वप्रतिपादनपरत्वात्। अपि च श्रुत्यन्तरं 'रूपं रूपं प्रतिरूपो बभूव' 'इन्द्रो मायाभिः पुरुरूप इयत' इति। 'नेह नानेति चाम्नानादिन्द्रो मायाभिरित्यपि। अजायमानो बहुधा मायया जायते तु सः' इति कारिकोक्तेः। न चास्य सर्वात्मत्वे सर्वगतत्वेऽपि संभोग-प्राप्त्यादिदोषो मन्तव्यः। जीवपरमात्मनोर्भोक्तृत्वाभोक्तृत्वादिवैशे-ष्यात्। संभोगप्राप्तिरिति चेन्न वैशेष्यात् इति न्यायात् (१।२।८)। ईदृशोऽयं सर्वात्मा विभुर्निर्गुणोऽपि स्वेच्छयाऽवतीर्णः श्रीदत्तो भगवान् इति,एवं प्रकारेण, मायया गुणिवदेजति, कंपते, चेष्टत इत्यर्थः। वस्तु-तस्तु नैजत्येव।'अनेजदेकं मनसो० तदेजति तन्नै०' इत्यादिश्रुतेः।

ननु बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा आत्मगुणा इति तार्किकाः। आत्मा, द्रव्यं, बुद्ध्यादिगुणाश्रयत्वात्, पृथिव्यादिवत्, इत्य-नुमानादात्मा निर्गुण इति वक्तुं दुःशकम्। पुनस्तस्यावतारान्तरेऽपि कथं निर्गुणत्वमित्यत आह नित्य इति। 'नित्यं विभुं सर्वगतं सुसू-क्ष्मम्'।'नित्यो नित्यानां चेतनश्चेतनानाम्'इत्यादिश्रुतेः नित्य आत्माऽ नित्यैर्बुद्ध्यादिगुणैर्गुणी न भवतीति भावः। 'अशब्दमस्पर्श० व्यापको

लिंग एव च' इत्यादिश्रुतिभिरात्मनो निर्गुणत्वं प्रत्यपादि। लिङ्गं बुद्धिस्तद्रहितोऽलिङ्ग एवेत्यपि भाष्यकृता व्याख्यातम्। 'न तस्य कार्यम्० न चास्य कश्चिज्जनिता० नायं कुतश्चिन्न बभूव कश्चित्' इत्यादिश्रुतिभिः, असम्भवस्तु सतोऽनुपपत्तेरिति न्यायाच्च (२।३।९) आत्मनोऽकार्यत्वान्नित्यत्वमुक्तम्। विवादाध्यासित आत्मा, नित्यः, अकार्यत्वाद्व्यतिरेके बुद्ध्यादिवत्, बुद्ध्यादयोऽनित्याः, कार्यत्वात्, घटादिवत्

ननु छान्दोग्ये आकाशोत्पत्त्यश्रवणादाकाशवत्सर्वगतश्चनित्य इत्यादिषूमानोपमेययोर्नित्यत्वप्रतिपादनान्नित्योप्याकाशो यथाऽ नित्येन शब्दगुणेन गुणी तथा नित्योऽयमात्माऽनित्यगुणैरपि गुणी द्रव्यत्वान्नित्याकाशवदिति चेन्न। न वियदश्रुतेरित्यधिकरणे (२।३।१) पूर्वपक्षानुवादपूर्वकमाकाशोत्पत्तिप्रतिपादनात्। तथा चायं प्रयोगः आकाशो, न नित्यः, आत्मन आकाशः संभूत इति श्रुतेर्जन्यत्वात्, वाय्वादिवत्। छान्दोग्ये तु यावद्विकारं त्विति सूत्रेण (२।३।७) न्यूनतापरिहाराय गुणोपसंहारन्यायेन आकाशादिरुपसंहृतः। तस्मादाकाशदृष्टान्तेनात्ममनःसंयोगाख्यानित्यगुणैर्गुणित्वं साधयितुं दुर्घटम्। न चाकाशव्यतिरिक्तमनित्यगुणं नित्यद्रव्यमात्मनोऽनित्यगुणेन गुणित्वे दृष्टान्तभूतं तार्किकसमये किंचित्प्रसिद्धमस्ति। ननु नभोमुसलयोरिवात्ममनसोः संयोगाख्यगुण इति चेत्तत्राह। अमना इति न विद्यते मनो यस्य सोऽमनाः। 'अप्राणो ह्यमनाः शुभ्र' इति श्रुतेः। सावयवं हि रज्जुघटादीतरेतरतः संयोगमुपैति इति लोके दृष्टं नभोमुसलयोः संयोगस्तु प्रत्यक्षो न भवति। संयोगाश्रयस्यातीन्द्रियत्वे सति संयोगस्यापि तथात्वात्स दृष्टान्तोऽप्यत्रासमञ्जसः। आत्मनस्तु क्वापि कथंचिदपि न मनआदेः संयोगः असंगत्वात् 'असंगो ह्ययं पुरुष' इति श्रुतेः।

ननु नात्मा दत्ताख्यो निर्गुणो विभुरिति वक्तुं शक्यः। तस्य प्रत्यग्बोधरूपत्वात्तस्यच प्रतिशरीरं जन्ममरणप्रतिनियमादिलिङ्गानुमितभेद-

त्वाल्लोकप्रसिद्धितश्च त्वमहमित्यादिभेदप्रसिद्धेरिति चेत् प्रतिनियमादिलिङ्गस्य व्यधिकरणासिद्धत्वात्, शास्त्रविरुद्धत्वाच्च लोकप्रसिद्धभेदस्य भ्रममात्रत्वमिति सदृष्टान्तमाह एकधेत्यादिना । एकधापि श्रीदत्ताख्य आत्माऽपूशशीवानया मायया बहुधा भाति । यथैकस्यापि शशिनः घटादिजलकृतमनेकत्वं तथा सर्वदैकरूपस्य निर्गुणस्य विभोः श्रीदत्तस्य सर्वसाक्षिणः मायातत्कार्यान्तःकरणोपाधिकृतबहुधात्वप्रतीतिर्भ्रान्तिरेवा । श्रुतिप्रामाण्यात् । तथा च श्रुतिः ' एको देवः सर्वभूतेषु गूढः सर्वव्या० निर्गुणश्च ' । एकः सन् बहुधा विचार च । एकं सन्तं बहुधा कल्पयन्ति । एकं सद्विप्रा बहुधा वदन्ति । एक धैवानुद्रष्टव्यम् । नेह नानास्ति किंचन । मृत्यो० पश्यति । एकमेवाद्वितीयं । एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ' इत्याद्या । स्मृतिश्च, अविभक्तं च भूतेषु विभक्तमित्याद्या । अत एव चोपमा सूर्यकादिवदिति न्यायश्च ( ३।२।८ ) एतेन जलचन्द्रदृष्टान्तेनाशेषसंसारधर्मविशिष्टान्तः करणोपाधिवशात्संसारिवद्भातोऽप्ययं प्रत्यग्रूपेणापि परमार्थतो न संसार्येव । यथा प्रतिबिंबितसर्वजलचन्द्राणां चलनादितदारोपितधर्माणां च युगपदवभासकः स्वस्थचन्द्रः सुतरामविकार्येवायमपि तथेति ज्ञेयम् । निरुपरागत्वात् । जीवात्मनो विकारित्वप्रतीतिस्तु बुद्ध्युपरागवशादेव । तथा च श्रुतिः 'ध्यायतीव लेलायतीव' इत्याद्या । विदितत्वाविदितत्वादिकमपि तादृशधर्मवत्त्या बुद्धेरुपाधिवशादेव न स्वतो जीवात्मन इति दिक् ।

---

१ टिप्पणी—पदार्थान्तरस्य पदार्थान्तराकारभजनमुपरागः । स च क्वाचज्ज्ञेयस्य ज्ञेयान्तरेण भवति । यथा स्फटिकस्य जपाकुसुमादिना । क्वचिज्ज्ञातुर्ज्ञेयेनोपरागः । यथा साक्षिणः साक्ष्येण, बुद्धेर्वा बोद्धव्यार्थजातेनेत्यादिकं सर्वमाकरादवगन्तव्यम् ।

भवतु नामैवं तथाऽप्येकधैवानुद्रष्टव्यमित्यादिश्रुत्यवष्टंभेन विभुरेकधापि इत्यादिनोक्तमस्यैकत्वं वक्तुं न शक्यते। निर्विकारनिराकारात्मकश्रीदत्तात्रेयाख्यपरमात्मनः पृथक्त्वेन विकारवत्साकारभूतभौतिकनानाविकाराणां प्रत्यक्षदर्शनादिति चेत्तत्राह नानेत्यादिनोत्तरार्धेन। यथा, येन प्रकारेण, नानाख्यात्मककुंडलादिषु, अनेकनामरूपात्मककुंडलकटकादिषु विकारेषु, सदा, आदौ मध्येऽवसाने च, विकारानुस्यूतं कांचनत्वं सन्निर्बाधमेव। कांचनमयं कांचनकार्यं कुण्डलकटकाद्यभिधाननिमित्तं यद्यपि, अथापि तत्सर्वं कुण्डलादिकं मिथ्यैव। यतस्तन्मतेर्व्यभिचारित्वात्। विकारोत्पत्तेः प्राग् विनाशादनन्तरं च नामरूपात्मकभेदाऽभावेन कनकस्यैव सत्वात्'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा'इति न्यायात्। एवं विवेचनात्कनकविकारद्रष्टुः पुरुषस्य कनककार्ये कुण्डलादौ सदा अनुगता मतिर्विकारेषु न विपर्येति इदं कुण्डलादिकं सर्वदा सत्यमेवेति। विकारेषु व्यभिचारात्तद्धेतुकांचने च व्यभिचारादर्शनाच्च। तस्माद्यथा काञ्चनं सत्यमेकमेव तथा प्राङ्मध्यान्ततः, आदौ मध्ये अन्ततः,आदौ मध्येऽन्ते च, विकृतिषु, भूतभौतिकविकारेषु दृष्टिसृष्टेषु, अयं पूर्वोक्तः कूटस्थः, कूटवत् निर्विकारत्वेन तिष्ठतीति कूटस्थः सर्वदैकरूपः। ' एकरूपतया तु यः। कालव्यापी स कूटस्थः' इत्यभिधानकोशात्। एकः, सजातीयादिभेदशून्यः, श्रीदत्तः सन्निर्बाध एव, न कदाचिदपि व्यभिचरतीत्यर्थः।

तथा च सामानाधिकरण्यन्तु बाधायामपि उपपद्यते इत्यभिप्रेत्य सृष्टिप्रतिपादिकाः श्रुतयः, 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किंचन मिषत्। सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्याद्याः। तथा च मध्येऽपि तदात्मकत्वप्रतिपादकाः, 'ब्रह्मैवेदममृतं पुरस्ता० ष्ठं। तत्सृष्ट्वा० स एतमेव सर्वं यदयमात्मा। सर्वं खल्विदं ब्रह्म। तज्जलानि० अतोन्यदार्तं वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं

एवं सौम्य स आदेशो भवति'इत्याद्याः। तथा चान्ते तत्त्वज्ञानेनोपाध्यपायेऽखण्डैकरसमात्रत्वं प्रतिपादयन्त्यः, 'यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते०इमाः सौम्य नद्यः स्यन्दमानाः० लवणमेतदुदकेवधाया० एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति'इत्याद्याः । स्मृतिश्च ' जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते । वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते । अव्यक्तं पुरुषे ब्रह्मन् निष्कले प्रविलीयते । पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः इति' ॥

यत एवं तस्मादेकधेति प्रतिज्ञातं सुस्थितं, परमात्मकार्यस्य जगतस्तत्प्रविष्टस्य जीवस्य च सर्वश्रुतिभिः परमात्मतावन्मात्रप्रतिपादनात्। न चैकवाक्यस्य नानार्थप्रतिपादनपरत्वान्याय्यात् सृष्ट्यादिप्रतिपादकवाक्यं सृष्ट्यादिप्रतिपादनपरमेवेदं, नात्मैकत्वप्रतिपादनपरमिति मन्तव्यम् । सृष्ट्याद्यर्थवादे श्रुतेस्तात्पर्याभावादद्वैत एव तात्पर्यमिति । सृष्ट्यादिवाक्यस्य स्वतः फलवत्त्वाश्रवणे अपि ( फलवत्सन्निधावफलं तदंगम् ) इति न्यायात् ,'तरति शोकमात्मवित् । ब्रह्मविदाप्नोति परं न बिभेति कुतश्चनामृतः समभवत्'इत्यादीनां फलवत्त्वश्रवणात्तत्त्वमसीत्याद्येकत्वप्रतिपादकवाक्यशेषभूतं सृष्ट्यादिवाक्यजातमपि फलवदेवेत्यलमतिविस्तरेण ॥ ७० ॥ ॐ तत्सत् ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीस्वामिविरचितं
वृद्धशिक्षाख्यं वेदान्तप्रकरणं समाप्तम् ।

**श्रीगुरुदेवदत्त.**

श्रीगणेशदत्तगुरुभ्यो नमः ।

श्री. प. प. वासुदेवानन्दस्वामिमहाराजविरचिता

# कुमारशिक्षा

( मूळश्लोक )

मराठी भाषान्तरासहित

माषान्तरकार—पण्डितप्रवर विष्णुशास्त्री खरे, न्यायवेदान्ताध्यापक-अद्वैतवेदान्तविद्यापीठ, सातारा.

( पंडितराज राजेश्वरशास्त्री द्रविड यांनीं शिक्षात्रयावर लिहिलेल्या संस्कृत प्रस्तावनेचा अनुवाद )

# श्रीगुरुः शरणम् ।



आज कुमारशिक्षा, युवशिक्षा, वृद्धशिक्षा ही शिक्षात्रयी, अत्यंत पूज्य अशा आमच्या परमगुरूंची कृति, प्रकाशित केली जात आहे. आप्ताचा उपदेश म्हणजे शब्द. या शब्दप्रमाणाच्या लक्षणास अनुसरून ही त्रयी श्रीमहाराजांच्या भाविक शिष्यवर्गास अत्यंत प्रमाणभूत आहे.

हें शिक्षात्रय प्रमाणानुसारि असल्यानें यावरून श्रीमहाराज हे, इतर आप्तांप्रमाणें श्रेष्ठ आप्त आहेत हें जसें स्पष्टपणें कळून येतें तसेंच ते अनेक लोकांनीं प्रत्यक्ष पाहिलेल्या अशा धर्म, ज्ञान, वैराग्य व ऐश्वर्य या दिव्य गुणांनीं युक्त, श्रीमहाराजांच्या विशुद्ध चारित्र्यावरूनही आसेतुहिमालया-पर्यंत स्पष्ट झालेलें आहे हा एक मोठा विशेष आहे. श्रीमहाराजांनीं ब्रह्मचर्यावस्थेंत यथाविधि वेदाध्ययन करून त्या वेदाध्ययनाच्या काळांतच मंत्रसिद्धि व शापानुग्रहाचें सामर्थ्य मिळविलें होतें हा एक दुसरा मोठा विशेष या ग्रंथाच्या प्रामाण्याचें दुसरें कारण आहे.

आदर्शभूत ब्रह्मचर्य, आदर्शभूत गृहस्थाश्रम व तसेंच संन्यासाश्रमाचें अनुष्ठान श्रीमहाराजांनीं करून दाखविलें आहे. तेंच या शिक्षात्रयांत स्पष्ट दिसत आहे. प्रथमाश्रमांत यथाविधि केवल सेवेनेंही ईश्वरदर्शन होऊं शकतें. याबद्दल दृष्टांत म्हणून शिरोळगांवांतील एका ब्राह्मण स्त्रीचें चरित्र, व प्रसंगानें, वेदांचें प्रामाण्य, ईश्वरास्तित्व इत्यादि विविध शास्त्रीय प्रमेयांचें वर्णन कुमारशिक्षेंत केलें आहे. युवशिक्षेमध्यें, गृहस्थाश्रम घेतल्यावर यथा-विधि सगुणोपासना केली असतां, भगवत्प्राप्ति होते याबद्दल उदाहरण म्हणून श्रीनारायणस्वामींचें चरित्र सांगितलें असून, प्रसंगानें मीमांसा-

